# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH M. A.,

DIRECTOR OF PUBLIC INSTRUCTION, N. W. P. & OUDH,

& G. THIBAUT PH. DR.,

PRINCIPAL, BENARES COLLEGE.

*No. 1.*

# सिद्धान्ततत्त्वविवेकः ।

## श्रीकमलाकरभट्टविरचितः ।

# SIDDHÁNTATATTVA-VIVEKA

A TREATISE ON ASTRONOMY

BY

BHATTA KAMALÁKARA.

EDITED BY PANDIT SUDHÁKARA DÚBE,

LATE SCHOLAR OF THE BENARES SANSKRIT COLLEGE.

**Fasciculus I.**

*BENARES:*

**PUBLISHED BY MESSRS. BRAJ B. DAS & CO.**

PRINTED AT THE BENARES PRINTING PRESS.

1880.

ENARES SANSKRIT SERIES;
A
COLLECTION OF SANSKRIT WORKS
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE,
UNDER THE SUPERINTENDENCE OF
R. T. H. GRIFFITH M. A.,
DIRECTOR OF PUBLIC INSTRUCTION, N. W. P. & OUDH,
& G. THIBAUT PH. DR.,
PRINCIPAL, BENARES COLLEGE.
*Nos. 1, 2, 3, 6 & 14.*

# सिद्धान्ततत्त्वविवेकः श्रीकमलाकरभट्टविरचितः ।

## तत्कृतशेषवासनासहितः ।

# SIDDHÁNTATATTVA-VIVEKA

A TREATISE ON ASTRONOMY

BY

BHATTA KAMALÁKARA,

WITH ŚESHAVÁSANÁ BY THE SAME AUTHOR.

EDITED BY PANDIT SUDHÁKARA DÚBE,
LIBRARIAN, SANSKRIT COLLEGE, BENARES.

*BENARES:*
PUBLISHED BY MESSRS. BRAJ B. DAS & CO.
PRINTED AT THE BENARES PRINTING PRESS
BY CHHANNULAL.
1885.

श्रीजानकीवल्लभो विजयते ।

# अथ सिद्धान्ततत्त्वविवेकस्य भूमिका ।

विपिनेऽपि पिनाकिनादिना यो
महितो दक्षसुतासमन्वितेन ।
स महीतनयाप्रियोऽर्चनीयो
भगवान् मङ्गलमातनोतु रामः ॥ १ ॥

अशीत्यधिकपञ्चदशशततमे शालिवाहनीयशके स्वपितृव्यस्य भास्करीयसिद्धान्तशिरोमणिमरीचिविरचयितुर्विश्वरूपोपनामकमुनीश्वरस्य स्पर्धया बाहुल्येन श्रीभास्करप्रकारखण्डनपर एव श्रीमज्जहाङ्गीरयवननृपतिवरप्रधानसांवत्सरस्य बीजकल्पलताद्यनेकग्रन्थकर्त्तुः श्रीकृष्णदैवविदः पौत्रेण वासनावार्त्तिकसौरभाष्यादिबहुनिबन्धनिर्मातुः श्रीनृसिंहदैवज्ञस्य तनूजेन निजज्येष्ठभ्रातृदिवाकरादधीतविद्येन भास्करविरोधिनापि भास्करभक्तेन श्रीकमलाकराभिधानेनाकारि किलायं सौरतत्त्वविवेकरूपः सिद्धान्ततत्त्वविवेकाभिधो ज्यौतिषसिद्धान्तः। अत्र यद्यपि परदूषणाभिलाषेणोदयान्तरखण्डनं (१६—२० पृ०) व्यासात्परिध्यानयनं (२९—३१ पृ० १४३—१५५ श्लो०) तात्कालिकस्पष्टभोग्यखण्डखण्डनं (१०६ पृ० १७५—१७७ श्लो०) लघुज्यासाधने स्पष्टभोग्यखण्डखण्डनं (१०७ पृ० १७९—१८३ श्लो०) वृत्तफलं परिभिन्नमित्यस्य समाधानं (४०० पृ० ३०७—३०९ श्लो०) धनर्णसन्धौ गतिफलाभावखण्डन-(४००—४०१ पृ० ३१०—३११ श्लो०) मित्यादयोऽन्यथार्थाः प्रतिपादितास्तथापि ध्रुवभस्यास्थिरत्वप्रतिपादनं (२३—२४ पृ० ७५—८० श्लो०) ग्रहगोलानां भ्रमे परस्पराऽऽघातवर्णनं (२४—२५ पृ० ८७—९१ श्लो०) जलाग्निगोलकल्पनं (२५ पृ० ९२—९३ श्लो०) गुरुत्वकेन्द्रकल्पनं (२६ पृ० १०९

—११० श्लो०) जलार्णवस्य भ्रमणं (२६ पृ० १२ श्लो०) भूपृष्ठस्य वर्त्तुलत्वनिरूपणं (२७ पृ० ११६—१२० श्लो०) भूगोलोऽर्द्धाधिको जलमग्न इति यवनमतनिरूपणं (२७ पृ० १२२—१२४ श्लो०) खालदात्ताभिधानगरात्तूलांशप्रतिपादनं (३२ पृ० १७२—१७४ श्लो०) घनकरकाभूकम्पमहामारीत्यादिकारणं (३५—३६ पृ० १९६—२०९ श्लो०) उदये रक्तबिम्बे कारणं (३६ पृ० २१०—२११ श्लो०) लोहगोलखण्डनं (४२—४६ पृ० २६१—३०३ श्लो०) दर्पणादौ प्रतिबिम्बदर्शने विशेषः (५० पृ० ३२७—३३३ श्लो०) अवर्गाङ्कस्य मूलविचारः (५१—५७ पृ०) रेखादिपरिभाषा (५९—६० पृ० २२—३३ श्लो०) सजातीयत्रिभुजलक्षणं (६०—६१ पृ० ३४—४८ श्लो०) भास्करीययोगान्तरज्यासाधनोपपत्तौ मुनीश्वरादिमतखण्डनं (६३—६८ पृ०) अपूर्वभावनोपपत्तिकथनं (६८—६९ पृ०) स्वकल्पितयोगान्तरज्यासाधनोपपत्तिवर्णनं (७४—७९ पृ०) तदन्यत्वस्वान्न लघुरिति भास्करीयलीलावतीपाठस्य खण्डनं (७९ पृ०) चापत्रिभागादिजीवासाधनं (८१—८२ पृ० ८१—८८ श्लो०) चापत्रिभागज्यासाधने मिर्जोलूकवेगस्य प्रकारसूचनं (८२ पृ० ८९ श्लो०) कुण्डसाधनं तद्वास्तवफलसाधनं च (९२—१०३ पृ०) प्रत्यंशज्यासाधनं (१०४—१०५ पृ०) ग्रहगोलस्वरूपवर्णनं (१२२—१२६ पृ०) चापजात्यत्रिभुजस्य भुजकोटिकर्णेषु परस्परं सम्बन्धप्रतिपादनं (१५१—१५४ पृ०) विषुवांशज्ञानार्थं सारणी (१५५—१५६ पृ०) चापजात्यत्रिभुजगणितं (१५८—१५९ पृ० १०६—११५ श्लो०) चापीयचतुरस्रे विशेषः (१५९ पृ० ११६—१२१ श्लो०) ब्रह्मदिनोपपत्त्यर्थं पृष्ठदृग्गोच्चादिसाधनं (१६४—१६८ पृ० १६३—१८५ श्लो०) रवेः पदज्ञानं (१६९ पृ० १९२—१९३ श्लो०) षड्विंशसमाक्षांशे नगरे लग्नज्ञानार्थं सारणी (१७३—१७४ पृ०) एकस्यामेव दिशि कदा छायाद्वयं तच्च कदैककपालइत्यादीनां निर्णयः (१८८—१९३ पृ०) तुरीययन्त्रेण भगोलीयवस्तुसा-

धन (१९७—२०४ पृ०) शुक्रबिम्बमपि चन्द्रबिम्बवादात यवनरवला-
कितं सूर्यशुक्रयुताविति कथनं (२०५—२०६ पृ० १२—२१श्लो०) बुध-
शुक्रयोस्तैजसत्वखण्डनं (२०७ पृ० २८—३५ श्लो०) ग्रहगोलदर्शने
विशेष: (२०७—२०८ पृ० ३७—४६श्लो०) न्यूनाधिकबिम्बदर्शने का-
रणत्रयप्रतिपादनं भगोलीयबिम्बसाधनं च (२०८—२१० पृ०) रवि-
ग्रहे स्पर्शे मोक्षे च सर्वदा मानैक्यार्द्धसममन्तरं न भवतीत्यस्य प्रति-
पादनं (२१८—२२१ पृ०) एकस्यैव खचरस्य नेत्राभ्यां स्थानान्तरे
दर्शनस्य कारणम् (२२३ पृ० १७०—१७४ श्लो०) बिम्बग्रहान्तरांशसा-
धनं (२२४ पृ० ८—११ श्लो०) ग्रहार्कबिम्बान्तरसूत्रसाधनं (२२४—
२२५ पृ० १२—१५ श्लो०) छायाक्षेत्राणां सजातीयत्वप्रतिपादनं
(२२६—२२९ पृ०) दिनकरकरनिकरेण निशाकरोऽर्द्धाधिक उज्ज्व-
लो भवतीत्यस्य प्रतिपादनं (२३२ पृ० १—२ श्लो०) सितसाधनं (२३६
पृ० २९—३२ श्लो०) शृङ्गोन्नतौ परिलेखे विशेष: (२४६—२४८ पृ०)
शरीयवलनानयनं (२५३ पृ० १४—१६ श्लो०) अन्यक्रान्तिसाधनं
(२५३ पृ० २१—२२श्लो०) स्पष्टक्रान्तिसाधनं (२५३—२५४ पृ० २३
—२५ श्लो०) ध्रुवस्पष्टापमसाधनं (२५४ पृ० २६—२८ श्लो०) चलग्र-
हसाधनं ततोऽपि स्पष्टापमसाधनं (२५४—२५५ पृ० ३०—३७ श्लो०)
बिम्बीयनतोन्नतांशसाधनं (२५७ पृ० ४२—४७ श्लो०) ग्रहोदयास्त-
योः कालांशे विशेषवर्णनं (२६६ पृ० १३०—१३६श्लो०) अपूर्वचन्द्रो-
दयसाधनं (२७२—२७४ पृ०) ग्रहणे छादकनिर्णय: (२७६—२७७
पृ० ११—२४ श्लो०) भूभासाधनं (२७७—२७८ पृ० २९—३८ श्लो०)
स्थितिकर्णसाधनं (२८५—२८६ पृ० ५६—६२ श्लो०) चन्द्रलोकाभि-
प्रायेण पृथिवीग्रहणवर्णनं (२९३ पृ० १—४ श्लो०) परमदृग्लम्बन-
स्थानप्रदर्शनं (२९६ पृ० २७—३५ श्लो०) दृग्लम्बनोपचयापचययुक्ति-
वर्णनं (३०५—३१० पृ०) वलयग्रहणस्थितिवर्णनं (३२८ पृ० २४४—
२४६ श्लो०) स्पर्शे मोक्षे च नतिकर्णसाधनं (३३०—३३१ पृ० २५८—

२६६ श्लो०) रविग्रहणे संमीलनोन्मीलनयोर्विशेषः (३३२ पृ० २७५—२७६ श्लो०) सप्तर्षिचलने विचारः (३५०—३५१ पृ० २८ श्लो०) पातसाधने कदम्बप्रोतीयबाणस्यैवाद्यापमे संस्कारः समीचीन इत्यस्य प्रतिपादनं (३६१ पृ० १२—१३ श्लो०) इष्टकालापमबाहुग्रङ्कून् ज्ञात्वा पलांशानयनम् (३६४ पृ० १४—१५श्लो०) दोर्ज्याद्युज्यापमज्यायोगं विदित्वा क्रान्तिज्यानयनमसकृद्विधिना (३६५ पृ० १७—१८ श्लो०) क्षितिजस्थयोर्क्षयोर्ज्ञातध्रुवकबाणयोरन्तरांशज्ञानं ततोऽक्षांशज्ञानं (३७०—३७१ पृ० ५८—६५ श्लो०) व्यवहारार्थं दिक्कल्पना (३७३ पृ० ८३—८५ श्लो०) भावसाधने विशेषः (३७५—३७७ पृ० १०२—१२१ श्लो०) स्पष्टवलनानयने प्रकारान्तरं (३७८—३८० पृ० १४१—१४८ श्लो०) चन्द्रगोलायनसन्धिसाधनं (३८१—३८३ पृ० १५३—१६६ श्लो०) विकलात्मकग्रहेभ्यः कल्पगतानयनं (३८६—३८७ पृ० १९१—२०० श्लो०) उद्दिष्टं कुट्टके तज्ज्ञैर्ज्ञेयं निरपवर्त्तनमित्यत्र भास्कराभिप्रायवर्णनं (३८९—३९२ पृ०) भास्करीयबीजे सरूपके वर्णकृती इत्येव पाठः समीचीन इत्यस्योपपादनं (३९४—३९९ पृ०) आयतसमान*वर्गकरणं (४०२—४०४ पृ०) अङ्कानां लघुतमापवर्त्यसाधनं (४०६ पृ० ३३७—३३८ श्लो०) इत्यादीनि सन्त्यनेकानि नूतनानि विषयान्तराणि।

सोऽयमनेकनूतनप्रकारान्तरसमेतः सद्गोलवासनाविचारमण्डितः साम्प्रतं श्रीभास्कराचार्यादिविरचितप्राचीनसिद्धान्तापेक्षया विशेषप्रकारान्तरजिज्ञासयाऽधीयते भारतवर्षीयैः सिद्धान्तविद्योत्साहिभिर्लोकैः सिद्धान्तः।

मन्यन्ते च निजात्मानं कृतकृत्यं ज्योतिःशास्त्रपारङ्गतं लोका अस्य सिद्धान्तस्य कमप्यध्यायमेवाधीत्य।

अथाऽऽसीदस्य सिद्धान्तस्याध्ययने पुस्तकस्य दुर्लभतया छात्राणां

---

* साम्प्रतमनेनैव विधिना रेखागणितद्वितीयाध्यायस्य चतुर्दशी प्रतिज्ञोपपद्यते।

बाहुल्येन दुःखम् । अस्माभिस्तदर्थमनेकानि पुस्तकानि संगृह्य का
श्रीसंस्कृतप्रधानपाठशालीयपुस्तकालयपुस्तकमतीव प्राचीनं शान्ति
चनाकालिकं च प्राप्य तत्स्थान् पाठानेव स्थलविशेषेऽत्यधिकबार्ता
प्राचीनत्वान्मुख्यान् कृत्वा श्रीकाशीसंस्कृतपाठशालाप्रधानाध्यक्षप्र
वरश्रीथिबोमहाशयानुमत्याऽयं श्रीकमलाकरेणैव रचितया शिवा
सनया सहितः संशोध्याशुद्धखण्डनानां ४०१ पृष्ठादिषु मण्डनं कृत्वा
बहून्यनेकानि प्रकारान्तराणि च विरचय्य "बनारससंस्कृतसीरि
जनाख्ये"पत्रे मुद्रायितः । अस्य सम्यगध्ययनेनान्तेवासिनो निजा
न् मनोरथान् पूरयन्त्वित्येव जगदीशमभ्यर्थये यदर्थमेवैतावान् प्रया
स इति ।

यदिह सज्जनकाः स्खलनं भवे-
न्नयनसत्पथदूरगतं विदः ।
अनवधानतया च महोदया-
स्तदखिलं कृपया परिशोध्यताम् ॥ १ ॥
सविलतत्त्वपरा परिपूर्णतां
कृतिरियं कमलाकरजाऽमला ।
अगमदङ्ग सुधाकरशोधिता
रसनभोगजभूमिमिते शके ॥ २ ॥

# अथ सिद्धान्ततत्त्वविवेकस्यानुक्रमणिका ।

# श्रीगणेशाय नमः ।

---

अथ सिद्धान्ततत्त्वविवेकः ।

ब्रह्माण्डोदरमध्यगावनिजलाग्न्यूर्ध्वेन्दुपूर्वग्रह-
क्षोर्ध्वस्थप्रवहाप्तगोलरचना सृष्टिर्यथावत्स्थिता ।
कालेस्मिन् गहने व्ययेस्ति सततं यस्मादियं तज्जय-
त्याद्यं निर्गुणमीशमव्ययपरब्रह्मैकतत्त्वं शुभम् ॥ १ ॥

यदुत्पत्तिलयौ सान्या सृष्टिर्यस्माच्च देहिनाम् ।
ब्रह्मादीनां विभुः सोयं व्यक्तीभूतः सनातनः ॥ २ ॥

ब्रह्माण्डान्तस्तमोहन्ता भगवान्तेजसां निधिः ।
नाम्नानिरुद्धः कालात्मा सूर्योयं सवितेति च ॥ ३ ॥

मण्डलान्तरगोजस्रं भुवनानि परिभ्रमन् ।
जलगोलग्रहर्क्षाणां भास्करः सर्वगोव्ययः ॥ ४ ॥

शास्त्रप्रवर्तको ध्येयस्तत्त्वज्ञैः कालबोधकृत् ।
त्रयीमयः सर्ववन्द्यो जयत्येकोम्बरस्थितः ॥ ५ ॥

केचित्सत्यस्य सूर्याच्च भिन्नोयमिति यद्बलात् ।
वदन्ति मूढवादस्याप्रामाण्यात्तदसत् ध्रुवम् ॥ ६ ॥

यच्छास्त्रवद्गानयनानुसारं
ब्रह्मेन्दुपूर्वा ऋषयोपि चक्रुः ।
स्वंस्वं च सिद्धान्तमनल्पकार्थं
गूढं सतां गोलविदां सुबोधम् ॥ ७ ॥

अस्ति चाधमपरंपरयाज्ञैर्नाशितं सदपि सौरमतं तत् ।
तत्कृतेरनवबोधत एवेत्थं किलोह्यमधुनातनवर्यैः ॥ ८ ॥

सङ्गोलवासनावाक्यैः करणग्रन्थयुक्तितः ।
सुस्थूलव्यवहारार्थं स्वाचार्यत्वप्रसिद्धये ॥ ९ ॥
वस्तुतत्त्वमबुद्ध्वैव स्वार्षैः साकं विरोधतः ।
बहुभिर्बहुधा पूर्वं सिद्धान्ता स्वधिया कृताः ॥ १० ॥
अतः सांवत्सराचार्यं गुरुं श्रीमद्दिवाकरम् ।
नत्वा नृसिंहजोऽर्कस्य मताच्छ्रीकमलाकरः ॥ ११ ॥
कृती तत्त्वविवेकाख्यं पूर्वास्पृष्टं सवासनम् ।
सिद्धान्तं गोलवित्तुष्ट्यै करोति स्वधियोत्तमम् ॥ १२ ॥
ब्राह्म्यं दिव्यं तथा पैत्रं प्राजापत्यं गुरोस्तथा ।
सौरं च सावनं चान्द्रमार्क्षं मानानि वै नव ॥ १३ ॥
भूतानामन्तकृत्कालः कालोऽन्यः कलनात्मकः ।
स द्विधा स्थूलसूक्ष्मत्वान्मूर्त्तश्चामूर्त्तसञ्ज्ञकः ॥ १४ ॥
मूर्त्तः प्राणादिकस्त्रुट्यादिकश्चामूर्त्तसञ्ज्ञकः ।
द्युरात्रवृत्ते तच्चक्रकला एवासव स्मृताः ॥ १५ ॥
खेन्दुगुर्वक्षरोच्चारश्वासकालो ह्यसुश्च तैः ।
पलं षड्भिः खषड्भिस्तैर्घटी तत्षष्टिसञ्ज्ञया ॥ १६ ॥
दिनं तत्त्रिंशता मासो वर्षं द्वादशभिश्च तैः ।
इत्थं नाक्षत्रमानं स्यात्प्रवहानिलजभ्रमात् ॥ १७ ॥
विकलानां कला षष्ट्या तत्षष्ट्या भाग उच्यते ।
तत्त्रिंशता भवेद्राशिर्भगणो द्वादशैव ते ॥ १८ ॥
इत्थं भमण्डले क्षेत्रे विभागास्तद्विदोदिताः ।
पूर्वक्रमादजादीनां तथा भानां च दस्रभात् ॥ १९ ॥
भचक्रैकभोगाद्विधोः केचिदार्क्षं
वदन्त्यत्र मासं बुधाः संहितासु ।

यदुक्तं भतः सावनाख्यर्क्षमानं
सदा गोलसञ्ज्ञानशास्त्रोपयुक्तम् ॥ २० ॥
पश्चिमभ्रमणाङ्गानां ग्रहाणां प्राकुजे बुधैः ।
उदयादुदयं यावत्सावनाहः प्रकीर्तितः ॥ २१ ॥
भानां तत्रार्क्षसञ्ज्ञं स्याद्ग्रहाणां सावनाह्वयम् ।
तत्र सूर्यस्य भूपूर्वं दिनसञ्ज्ञोप्युदीरितः ॥ २२ ॥
अमान्तादमान्तन्तु यावत्स चान्द्रो-
भवेत्सङ्क्रमात्सौरसञ्ज्ञोत्र मासः ।
क्रमात्खाग्नितिथ्यात्मकः खाग्निभांशा-
त्मकस्तद्दिनाख्यस्य तज्ज्ञैः सदोक्तः ॥ २३ ॥
स्थिरर्क्षसावनाहस्तु भभ्रमस्तत्रभात्र सः ।
उक्तार्क्षषष्टिघटिकात्मक एवोक्तभभ्रमः ॥ २४ ॥
अहोरात्रं पितॄणां तु चान्द्रो मासः पुरोदितः ।
रवेस्त्वर्क्षैकभोगोत्र रविवर्षं तदेव हि ॥ २५ ॥
देवानामसुराणां च द्युरात्रं तु विपर्ययात् ।
दिनरात्र्योस्तथा खाङ्गवह्नि ३६० सङ्ख्यद्युरात्रकैः ॥ २६ ॥
दिव्यमासुरसञ्ज्ञं च वर्षं ज्ञेयं गुरोरथ ।
मध्यैकराशिभोगेन वर्षं संवत्सराभिधम् ॥ २७ ॥
अनाद्यनन्तसर्वेशे महाकाले भमण्डलम् ।
निरन्तरं भ्रमत्यत्र सग्रहं गगनस्थितम् ॥ २८ ॥
कस्मिन्नप्यऽचलं काले वक्तुमर्हमिदं नहि ।
शश्वत्तद्भ्रमणात्प्रत्यक् परावृत्ते भमण्डले ॥ २९ ॥
लङ्कार्द्धरात्रे चलिता ग्रहोच्चपातादयः स्युर्युगपच्च सर्वे ।
नाद्याह्वयेजादियुतास्तदैव ह्यस्त्याह्वयं कालमुदाहरन्ति ॥ ३० ॥

कालेन येनति पुनः स योगस्तं सृष्टिकल्पं प्रवदन्ति सन्तः ।
अतीन्द्रियज्ञैर्ग्रहपूर्वकाणां सदोदिता ये भगणाः स्वशास्त्रे ॥ ३१ ॥
मानानि सौरेन्दवसावनार्क्षपूर्वाणि तदा युगपच्च सर्वम् ।
सम्पूर्णमुक्तं परिपूर्त्तिमेति कालेन येनेत्युदितः स्वदृष्टेः ॥ ३२ ॥
तं सृष्टिकल्पं ग्रहगोलविज्ञा-
वदन्ति सूक्ष्मग्रहपूर्वसिद्ध्यै ।
स सृष्टिकालः कमलोद्भवस्य
जनेः शतघ्नाब्धिनगाब्धिवर्षैः ४७४०० ॥ ३३ ॥
दिव्यैर्भवेद्ब्रह्मसमुद्भमात्तं
कल्पप्रमाणं समयं वदन्ति ।
ब्राह्मं च कल्पं मुनयः स्वधर्मे
संकल्पकादौ नियमेन योग्यम् ॥ ३४ ॥
उक्तलक्षणकल्पाख्यः स कालस्तुल्य एव हि ।
सृष्टिब्रह्मादिभेदेन भिन्नः स्वस्वफलाप्तये ॥ ३५ ॥
महायुगसहस्रेण कल्पस्तत्तु महायुगम् ।
चतुर्युगमितं तानि चतुर्लघुयुगानि च ॥ ३६ ॥
कृताह्वयं तथा त्रेताह्वयं द्वापरसञ्ज्ञकम् ।
तथा कल्याह्वयं ज्ञेयं धर्माङ्घ्रिह्रासतः क्रमात् ॥ ३७ ॥
एवं दिगङ्घ्रिधर्मोयमुदितोस्ति महायुगे ।
खखाभ्रदन्तवेदैश्च ४३२००० युगाग्निद्वीन्दुसंगुणैः ॥ ३८ ॥
सूर्यवर्षैः क्रमेणैते स्युः कृताद्या युगाङ्घ्रयः ।
कृत० १७२८००० त्रे० १२९६००० द्वा० ८६४००० क० ४३२०००
एषां स्वार्कांशतुल्यौ च सन्ध्यासन्ध्यांशकौ सदा ॥ ३९ ॥
आद्यन्तयोर्युतौ तेषामयुतघ्नरदाब्धयः ४३२०००० ।

महायुगं मनुस्तैश्च युगैः कुद्रि ७१ मितैस्तथा ॥ ४० ॥
आदिमध्यावसानेषु कृताब्दैः सन्धयः स्मृताः ।
मनूनां तिथिसङ्ख्याकास्तत्रावश्यं जलप्लवः ॥ ४१ ॥
अर्काब्दैरिन्द्रसङ्ख्याकमनुभिर्ब्राह्म एव सः ।
कल्पः प्रोक्तः फलार्थं वै कालविद्भिर्मुनीश्वरैः ॥ ४२ ॥
ससन्धिमनुभिश्चैवं कोटिघ्नास्ते रदाब्धयः ४३२००००००० ।
प्रवदन्ति दिनं ब्राह्ममहोरात्रं च तद्द्वयम् ॥ ४३ ॥
वर्षाहोरात्रसङ्ख्या तु खाङ्गाग्निप्रमिता विधेः ।
परमायुः शतं तस्य तयाहोरात्रसङ्ख्यया ॥ ४४ ॥
दैनंदिनसुसृष्ट्यर्थमनिरुद्धार्कजो विधिः ।
भूस्थितानां च जीवानां न स्थिराम्बरवासिनाम् ॥ ४५ ॥
अनीदृशं जगदिदं न कदापीति वाग्बलात् ।
प्रमाणात्तल्लयभ्रान्तिं त्यज मूढानिशं ध्रुवम् ॥ ४६ ॥
भूमेरेव विभागास्ते भूर्भुवः स्वः सदोदिताः ।
व्यक्षाद्याम्ये तथा सौम्ये तथा मेरुरिति क्रमात् ॥ ४७ ॥
तद्गतब्रह्मसृष्टेः स्यादिलयस्तद्दिनान्तजः ।
सर्वदैव महाकाले महर्लोकादि खेस्ति हि ॥ ४८ ॥
मार्कण्डेयपुराणादौ सच्छ्रीभागवतेपि च ।
स्वीयप्रमाणवचनान्यपि स्पष्टानि सन्ति वै ॥ ४९ ॥
सौरे तु सृष्टिवर्षोक्तौ ग्रहर्क्षसृजनं कृजम् ।
उक्तं तेन स्थिरा सृष्टिः कथं युक्तेति चेच्छृणु ॥ ५० ॥
जपपूजनहेतोस्ते निर्मिता देवतांशकाः ।
विधिना विश्वरूपा ये तद्भिन्नास्त्वव्ययाः सदा ॥ ५१ ॥
ब्राह्ममानमिदं प्रोक्तं तादृश्याः कमलोद्भवाः ।

कालेऽस्मिन् बहवो जाता भविष्यन्ति सनातने ॥ ५२ ॥
आयुषोऽर्धं गतं तस्य वर्त्तमानस्य चाग्रिमात् ।
कल्पादितः प्रमाणार्कपूर्वशास्त्रानसारतः ॥ ५३ ॥
आद्यपूरुषपरम्परया श्री-
शालिवाहनशकेन्द्रमुखेन ।
वत्सरा विधिमुखाद्विदिता ज्ञै-
स्तान्क्रमादथ वदामि फलार्थम् ॥ ५४ ॥
स्वायंभुवो मनुः स्वारोचिषश्चोत्तमजस्तथा ।
तामसो रैवतस्तद्वच्चाक्षुषस्ते गतास्तु षट् ॥ ५५ ॥
वैवस्वतो मनुश्चायं सप्तमोऽस्त्यधुना किल ।
इत्यब्धादेस्तु मनवः षट् व्यतीता युगानि वै ॥ ५६ ॥
भमितानि तथा चाङ्घ्रित्रयं तद्वत्कलेर्गताः ।
नन्दाद्रीन्दुगुणाः ३१७९ सौराश्चाब्दास्त्वित्थं शकानने ॥ ५७ ॥
ससन्धिसर्वयोगे स्युः सौराब्दा विधिवत्सतः ।
गोद्रीन्द्वद्र्यब्धिनन्दाश्वि-
शैलनन्देन्दु १९७२९४७१७९ संमिताः ॥ ५८ ॥
शालिवाहनशकेन युतास्ते
स्वार्कवर्षवदनेन गता स्युः ।
खाभ्रखाब्धिरसखाद्रिशशाङ्कैः १७०६४०००
सृष्टिवत्सविधिसौरगताब्दैः ॥ ५९ ॥
हीनिता इह च तेऽब्दगणाः स्यात्सोऽथ सृष्टिवदनाद्ग्रहसिद्धै ।
येन सर्वचलनोक्तयुतिर्हि सृष्टिकाल इह नो विधिवत्सम् ॥ ६० ॥
यच्छिरोमणिकृता निजतन्त्रे ब्रह्मणो दिनमुखं ग्रहसृष्टेः ।
वत्समुक्तमिदमार्षविरोधात् तत्तु तुच्छतरमल्पमतिज्ञैः ॥ ६१ ॥

चेद्विष्णुधर्मोत्तरमेव मूलं ब्राह्मं पुराणं वदसीह तत्तु ।
अतान्त्रिकैर्नाशितमेव पूर्वं सन्दृश्यते सर्वजनप्रसिद्धम् ॥ ६२ ॥
अत्र तत्त्रुटितफक्किकयेदं सृष्टिवर्षवचनं तु विनैव ।
दृश्यतेथ च तदेव हि मूलं संविधाय रचयन्ति हि शास्त्रम् ॥६३॥
सूर्यादिदेवैर्मुनिभिः स्वतन्त्रैः
शाकल्यमुख्यैर्गदितं हि तस्य ।
विरोधतः श्रीकमलोद्भवोक्तिर्न
स्यात्कथंचिद्धि यतोर्कजः सः ॥ ६४ ॥
ब्रह्मा प्राह च नारदाय हिमगुर्यच्छौनकायामलं
माण्डव्याय वशिष्ठसञ्ज्ञकमुनिः सूर्यो मयायाह यत् ।
प्रत्यक्षागमयुक्तिशालि तदिदं शास्त्रं विहायान्यथा
यत्कुर्वन्ति नराधमास्तु तदसद्वेदोक्तिशून्या भृशम् ॥ ६५ ॥
किं चात्र सूर्योद्भव एव चोक्तो ब्रह्मा न सूर्यादधिकः कथंचित् ।
भूकर्णिकामेरुगतालपकाच्छ्रीसूर्योतिदूरेधिक एव यस्मात् ॥६६॥
किं चाधमास्तद्वचसंमतं तु
त्यक्त्वा स्वार्थैकाल्पमतं गृहीत्वा ।
मूलं प्रमाणं कथयन्ति लोके
शास्त्रं स्वकीयं तु विचित्रमेतत् ॥ ६ ७ ॥
सृष्ट्यर्थं कल्पभेदेन विधिसृष्ट्यादिकालयोः ।
ब्रह्मार्कमतभेदं ये मन्यन्ते ते कुबुद्धयः ॥ ६८ ॥
युगेयुगे महर्षीणामित्याद्युक्त्याधुनातनः ।
कल्पः सोऽर्कोक्त एवास्ति ब्रह्मणो नहि किं तु सः ॥ ६९ ॥
अन्य एवास्ति तत्कालभेदाद्यस्मादतोऽधुना ।
ब्रह्मोक्तं च कुबद्ध्युक्तं फलार्थं ग्रहसंभवम् ॥ ७० ॥

सिद्धान्तगणितज्ञानं दुष्टं स्यादन्यकालजम् ।
अर्कोक्त एव कल्पश्चेद्विधेर्भेदः कथं तयोः ॥ ७१ ॥
वस्तुतः कल्पभेदोपि स्थिरसृष्टौ न विद्यते ।
अकल्पयद्यथा पूर्वं धातेत्यादिश्रुतिः किल ॥ ७२ ॥
अस्ति यत्र प्रमाणं च कल्पजं भेदमप्यथ ।
स्वीकुर्वन्त्यधमास्तत्र तत्प्रत्यक्षातिबाधतः ॥ ७३ ॥
शास्त्रमाद्यं तदेवेदं यत्पूर्वं प्राह भास्करः ।
इति श्रीसूर्यवचनादपि भेदो न कल्पजः ॥ ७४ ॥
युगानां परिवर्तेन कालभेदोत्र केवलः ।
अस्यार्थस्त्विह यातैष्यकालजो भेद एव हि ॥ ७५ ॥
नहि तद्भगणादीनां भेदार्थः सौरसत्कृतेः ।
तद्भेदकारणं त्वत्र ज्ञेयं सौरविदाऽन्यथा ॥ ७६ ॥
स्वैककल्पीयभगणान्तरगानि युगानि वै ।
तत्तद्भेदाच्चकभेदः कथं सङ्गच्छतेऽबुध ॥ ७७ ॥
चेदन्यथैव ग्रहगोलसंस्था येनोक्तभेदस्त्विह कल्पभेदात् ।
भवन्मते सा नहि युक्तियुक्ता पुरोक्तदूषणतादवस्थ्यात् ॥ ७८ ॥
यन्नारदाय गदितं चतुराननेन
शाकल्यसञ्ज्ञमुनिनात्र तदेव बद्धम् ।
अर्काविरुद्धमिति तत्खलकैर्विरुद्धं
यत्स्वीयमप्यसदपूर्णकथास्थितं तत् ॥ ७९ ॥
सिद्धैककालसृष्ट्यादेर्द्वैविध्यस्यातिबाधतः ।
अर्कवद्ब्रह्मपक्षेपि कल्पोयमधुनातनः ॥ ८० ॥
यदि स्यात्तर्हि शाकल्यस्वमतादविरोधतः ।
युक्तं तत्परसृष्ट्यब्दत्रुटितग्रन्थकल्पनम् ॥ ८१ ॥

प्रत्यक्भ्रमेण प्रवहानिलस्य भ्रमत्यपि द्राक् सखग भचक्रे ।
तदल्पगत्येन्द्रदिशं चरन्ति स्वमार्गगास्ते खचराः सदैव ॥ ८२ ॥
मन्दद्रुतौ स्वल्पगतेश्च भानं न जायते सर्वजनैश्च तेन ।
पूर्वोदयश्चास्तमयः प्रतीच्यां संदृश्यतेऽत्र ग्रहतारकाणाम् ॥ ८३ ॥
पूर्वक्रमाङ्गानि गृहाणि तत्र यथोत्तरं स्वाग्रिमराशिभानाम् ।
भोगं प्रकुर्वन्ति सदेन्द्रपूर्वास्तत्राग्रगानेऽपि सतां प्रतीतिः ॥ ८४ ॥
लङ्कार्द्धरात्रे यमकोटिजात-
सूर्योदये चाश्वचलांशकादौ ।
मधोः सितादौ रविवासरादौ
खेटोच्चपातादि समस्तमुक्तम् ॥ ८५ ॥
चारक्रमात्कालवशाद्विभिन्नमपि स्वमेषाश्विमुखे बभूव ।
सृष्ट्याद्यकाले युगपच्च पूर्वमेकत्र चेत्थं न विधेर्दिनादौ ॥ ८६ ॥
यश्चाग्रिमारम्भ इहान्त एव
पूर्वस्य सोऽस्माद्विधिसृष्टिजादिः ।
ज्ञेयस्तदन्तोऽपि तथान्तसञ्ज्ञो-
प्यादिश्च तेऽस्मिन् समये ह्यसञ्ज्ञाः ॥ ८७ ॥
कः खण्डकालात्मक एव भूस्थतद्भूतसृष्टेर्दिनमामनन्ति ।
तस्याथ तद्रात्रिमितिं तथा तल्लयादितिद्धूर्ध्वमपि स्वसृष्टिः ॥ ८८ ॥
सृष्ट्यादेः कदिनस्यान्तस्तावद्भूमिजनस्थितिः ।
तिथ्यादिव्यवहारोऽपि तद्गतोऽन्यत्र नो भुवि ॥ ८९ ॥
ग्रहाद्युक्तसृष्टिस्तु लङ्कार्द्धरात्रे
यथार्थास्ति देवर्षिवक्त्रागमोक्त्या ।
ततः सृष्टिकालान्तरे कस्य वक्त्रां
कथंचिन्न लङ्कोदये ऽर्केकवारे ॥ ९० ॥

अहो विष्णुधर्मोत्तरं चापि सम्यङ्-
न बुद्धं स्वमूलं महद्ग्रन्थकारैः ।
यतस्तत्र सृष्टिस्तु लङ्कार्द्धरात्रे
निरुक्ता कथं तन्मते तत्कवक्त्रम् ॥ ९१ ॥

तथा च तद्वाक्यम् ।

तत्र सूर्य्योच्चपातैः सममेव लङ्काधोदक्षिणोत्तररेखायां फाल्गुनान्ते सर्व एव कल्पादावर्कदिने मीनमेषसन्धिगा भवन्ति कल्पावसाने चेति ॥

सर्वारम्भः सृष्टिकालः पुनः स
कल्पाब्दैः स्यात्सृष्टिकालेन तेन ।
सृष्ट्यूर्ध्वं कः सृष्टिवर्षैर्ग्रहार्थ-
मित्थं कैश्चित्कल्पितं तन्न युक्तम् ॥ ९२ ॥

सृष्ट्यादेः सृष्टिकल्पान्तं भगणाः पूर्वयायिनाम् ।
रव्यादीनां निरग्रास्तान्प्रवदाम्यर्कशास्त्रतः ॥ ९३ ॥

कल्पे सूर्य्यज्ञशुक्राणां कोटिघ्नास्र रदाब्धयः ४३२०००००० ।
भगणाः कुजजीवार्किशीघ्रोच्चभगणास्र ते ॥ ९४ ॥

सहस्रघ्नरसाग्नित्रित्रीष्वब्धद्रीषवो विधोः ५७७५३३३६००० ।
खखशून्यरदाष्टर्तुनन्दद्विद्विमितास्तथा ॥ ९५ ॥

२२९६८३२००० भौमस्याथ ज्ञशीघ्रोच्चभगणाः सृष्टिकल्पजाः ।
अयुतघ्नरसव्योमशैलाग्न्यङ्काद्रिभूमिताः ॥ ९६ ॥

१७९३७०६०००० अयुतघ्ना गुरोर्द्विर्द्वि-
युगषड्वन्हयस्तथा ।
३६४२२०००० खखखर्तनगाग्निद्वि-
द्विशून्याद्रि ७०२२३७६००० मितास्तथा ॥ ९७ ॥

शुक्रशीघ्रोच्चभगणाः प्राग्गत्या च तथा शनेः ।
खखखाष्टर्त्तुपञ्चर्तुमनवो १४६५६८००० थार्कतः क्रमात् ॥ ९८ ॥
सप्ताष्टरामाः ३८७ सूर्यस्य मन्दोच्चभगणाः स्मृताः ।
सद्दस्रघ्ना विधोस्त्र्यभ्रद्ध्यष्टाष्टांबुधयस्तथा ॥ ९९ ॥
४८८२०३००० भौमस्याब्धिवियद्दस्रा २०४ बुधस्याष्टर्त्तुवन्हयः ३६८ ।
खखरन्ध्राणि ९०० जीवस्य शुक्रस्यार्थगुणेषवः ५३५ ॥ १०० ॥
शनेर्नन्दाग्नयस्त्वेवं ३९ पातानामथ वामतः ।
खखखाष्टाग्निदस्रद्विनिदस्राः शशिन २३२२३८०००,स्तथा ॥ १०१ ॥
मनुदस्रा २१४स्तु भौमस्य बुधस्याष्टाष्टसागराः ४८८ ।
सहस्रघ्न खषट्खाद्रिशशिषट्रामभू १३६१७०६००००युताः ॥ १०२ ॥
कृताद्रिचन्द्रा जीवस्य १७४ त्रिखाङ्कास्तु ९०३ भृगोस्तथा ।
सहस्रघ्नर्तुशैलाग्निद्विखसप्तद्विसंयुताः २७०२३७६००० ॥ १०३ ॥
शनिपातस्य भगणाः प्रोक्ता यमरसर्तवः ६६२ ।
मानान्यथ क्रमादर्कभास्करीत्या महायुगे ॥ १०४ ॥
उदयादुदयं भानोर्भूमिसावनवासराः ।
वस्वद्व्यष्टाद्रिचन्द्राङ्कसप्ताद्रितिथयो युगे १५७७९१७८२८ ॥ १०५ ॥
भानामष्टाश्विवस्वद्रि-
त्रिद्विद्व्यष्टशरेन्दवः १५८२२३७८२८ ।
चान्द्राः खाष्टखखव्योम-
खाग्निखर्तुनिशाकराः १६०३०००००८० ॥ १०६ ॥
षड्वन्हित्रिकृताशाङ्कतिथयस्त्वा १५९३३३६ धिमासकाः ।
तिथिक्षया यमार्थाश्विद्व्यष्टव्योमशराश्विनः २५०८२२५२ ॥ १०७ ॥
खचतुष्कसमुद्राष्टकुपञ्च ५१८४०००० रविमासकाः ।
भोदया भगणैः स्वैः स्वैरूनाः स्वस्वोदया युगे ॥ १०८ ॥

भवन्ति शशिनो मासाः सूर्येन्दुभगणान्तरम् ।
रविमासोनितास्ते तु शेषाः स्युरधिमासकाः ॥ १०९ ॥
सावनाह्वानि चान्द्रेभ्यो द्युभ्यः प्रोह्य तिथिक्षयाः ।
अधिमासोनरात्र्यर्क्षचान्द्रसावनवासराः ॥ ११० ॥
सद्भवन्नास्तु ते सृष्टिकल्पे स्युर्ये च कल्पजाः ।
भगणास्ते सहस्राप्ताः पूर्वोक्ताः स्युर्महायुगे ॥ १११ ॥

युगसौरमासाः ५१८४०००० सौरदिनानि १५५५२००००० चान्द्रमासाः ५३४३३३३६ चन्द्रदिवसाः १६०३०००८० अधिमासाः १५९३३३६ अवमानि २५०८२२५२ ॥

विधिकल्पोक्तिवत्सृष्टिकल्पेपि युगसञ्ज्ञया ।
व्यवहारः स विज्ञेयो लाघवाद्गणिताय वै ॥११२ ॥

इति भगणमानाध्यायः ॥

सर्वप्रमाणागमसुप्रसिद्धाः खेटर्क्षपातोच्चकपूर्वकाणाम् ।
कल्पोदिता ये भगणादयस्तत्सर्वं निरग्रं किल सप्रमाणम् ॥ १ ॥
स कल्पकालो न विधेर्दिनादेस्तत्र प्रवृत्तिर्न यतोखिलानाम् ।
सृष्टेर्मुखे तद्भगणादिकानां प्रारम्भ उक्तोस्ति ततः स कल्पः ॥२॥
सृष्ट्युत्थकल्पभगणैरतोनुपतनाद्बुधैः ।
ग्रहाद्यानयनं सम्यक्क्रियते खेटचारतः ॥ ३ ॥
येषां मते निशाकल्पे ब्राह्मे सर्वलय स्मृतः ।
साऽसत् यतो लयस्तत्रोदितः सोनास्ति भूगतः ॥ ४ ॥
पाञ्चभौतिकजीवानां नो नित्याम्बरवासिनाम् ।
अन्यथा तल्लये चाराभावात्तद्भगणादिजा ॥ ५ ॥
कथं पूर्तिर्निशाकल्पेस्युचिता तन्मते किल ।
सद्भावाद्भगणादीनां त्यज दुष्टलयं बुध ॥ ६ ॥

सौराब्दा ये सृष्टिवर्षात्प्रयाता यावत्खीयं सौरवर्षस्य वक्त्रम्।
निघ्नास्ते वै सृष्टिकल्पाधिमासैस्तन्त्यैस्तैः सौरवर्षैर्विभक्ताः ॥ ७॥
लब्धा ये स्युः स्वाधिमासा निरग्रा वर्षादिस्थे सृष्टिसौराब्दवृन्दे।
अर्कैर्निघ्ने संयुतास्चान्द्रमासास्चैत्रादिस्थाः सृष्टितस्ते च नूनम्॥८॥
संयुक्तास्ते यातचैत्रादिमासै-
स्त्रिंशन्निघ्ना याततिथ्यन्विताश्च।
तिथ्यन्ते स्वे चान्द्रवाराः पृथक्स्था-
निघ्नाः कार्य्या सृष्टिकल्पावमैस्ते ॥ ९॥
भक्तास्तत्स्थैश्चान्द्रवारैरवाप्ता-
व्यग्रा ये स्युस्त्वावमाख्याः क्षयाह्वाः।
हीनाः कार्य्यास्ते पृथक्स्थापितेषु
भानोर्मध्यः सावनोऽहर्गणः स्यात् ॥ १० ॥
लङ्कामध्यार्द्धरात्रस्थो यमकोट्युदयेऽप्ययम्।
मध्यमार्कोदयैः सिद्धः प्राङ्नैर्त्यबुधा भ्रमात् ॥ ११ ॥
अत्राधिमासावमशेषके च त्याज्ये यतः सावयवाधिमासाः।
योज्यास्तदा स्युर्निजसौरवर्षमुखेऽन्यथा चैत्रमुखेन्दुमासाः॥१२॥
प्रवृद्धिस्तु वर्षादिभवाधिशेषं चैत्रादिवर्षादिगतानिशं सा।
चान्द्री यतः सावयवेन्दुमासास्ते सौरवर्षादिगताश्च तत्र ॥ १३ ॥
ये स्युर्विहीनावयवाः सदा तैः समास्तु पूर्वं मधुवक्त्रचान्द्राः।
योऽब्दादिचान्द्रावयवश्च तेन समं हि वर्षाद्यधिमासशेषम् ॥१४॥
हीना यदा सावयवावमास्ते तिथ्यन्तकाले द्युगणस्तदानीम्।
निशीथजश्चेतरथात्र तुल्यवियोगयोगादुदिताग्रयोर्हि ॥ १५ ॥
स सप्ततष्टो रविवारपूर्वा-
वारोऽथ चैत्रादिकमासकेषु।

स्फुटोधिमासः पतितो यदा स्या-
च्चैत्रादितस्तत्सहिताश्च मासाः ॥ १६ ॥
ग्राह्यास्तदाहर्गणसाधनार्थं
यदा स्ववारो न भवेद्द्युवृन्दे ।
सैको निरेकः सुधिया दिनौघः
कार्यः स स्पष्टैर्द्युगणः स्ववारे ॥ १७ ॥
स्पष्टोधिमासः पतितोप्यलब्धो-
यदा यदा वाऽपतितोपि लब्धः ।
सैकैर्निरेकैः क्रमशोधिमासैः
साध्याः सुधीभिर्मधुवक्त्रचान्द्राः ॥ १८ ॥
सृष्टिकल्पभगणैर्दिनसङ्घः संगुणः कथिततत्कुदिनैश्च ।
भाजितः फलसमा भगणाद्या मध्यमा रविमुखाः प्रभवन्ति ॥१९॥
लङ्कार्द्धरात्रे किल मध्यमार्कचिन्हेथ चैकद्युगणोङ्गवास्ते ।
साध्यास्तु तास्तद्गतयः कलाद्याः स्युर्मध्यमा मध्यखगप्रसिद्ध्यै ॥ २० ॥
नन्देषवोष्टौ तरणेः ५९ । ८ खनन्द-
शैलाः शराग्निप्रमिता विधोश्च ७९० । ३५ ।
तदुच्चभुक्तिः षडिलाब्धय ६ । ४१ । स्त-
त्पातस्य रामाग्रचग्निवा ३ । ११ विलोमात् ॥ २१ ॥
रूपाग्नयः षड्द्विमिताः कुजस्य ३१ । २६
तथेषुसिद्धाश्च रदा ज्ञतुङ्गे २४५ । ३२ ।
गुरोः शराः खं ५ । ० भृगुतुङ्गकस्य
षडङ्कका नागमिताः ९६ । ८ शनेर्द्वे २ ॥ २२ ॥
सृष्ट्युत्थकल्पार्ककुवासरेन्दुवाराधिमासावमसञ्ज्ञका ये ।
भक्ताश्च ते तद्गतसौरवर्षैः सौरैकवर्षे प्रभवन्ति सर्वे ॥ २३ ॥



निजेष्टवर्षैर्गुणितान्यभीष्टवर्षोद्भवानीह भवन्ति तानि ।
स्वसौरवर्षीयकुवासरा ये सप्तोद्धृताः शेषमितं दिनाद्यम् ॥ २४ ॥
वारोऽर्कतस्तत्र गतोऽब्दपः स्यात् तदग्रिमस्त्वेति सुधीभिरूह्यम् ।
अहर्गणं वर्षमुखात्सुखार्थं कृत्वा वदन्त्यानयनं ग्रहाणाम् ॥ २५ ॥
अत्र पूर्वैः सौरवर्षात्कृत्वाऽहर्गणमुद्गमे ।
तत्र वारस्य गणना कृता चाब्दपतेः सदा ॥ २६ ॥
अयुक्ता सा यतस्तत्र वर्त्तमानो न नो गतः ।
वारोऽस्त्यब्दपतेः किं तु स्वाब्दपाग्रिमतो गतः ॥ २७ ॥
इदमुक्तं तदा सौरवर्षवक्त्रं यदा भवेत् ।
इष्टकाले यदैवार्कोदयेऽस्त्यब्दपतेर्गतः ॥ २८ ॥
विनैव निर्णयं त्वित्थं सदैवाब्दपतेर्न सत् ।
प्रवृत्तस्यैव वारोक्तिस्तज्ज्ञैर्येनाद्रिताऽस्ति हि ॥ २९ ॥
अहर्गणो मध्यमसावनेन कृतश्चलत्वात्स्फुटसावनस्य ।
तदुत्थखेटा उदयान्तरेण हीनान्विताः संविहिताः फलेन ॥ ३० ॥
लङ्कोदये स्युर्न कृतं तदाद्यैर्यतोऽन्तरं तच्चरमल्पकं च ।
मध्यार्कभुक्ता असवो निरक्षे ये ये च मध्यार्ककलासमानाः ॥३१॥
तदन्तरं यत्स्फुटमध्ययोस्तद्-
द्युपिण्डयोः स्याद्विवरं गतिघ्नम् ।
भक्तं द्युरात्रासुभिराप्तलिप्ता-
हीना ग्रहाश्चेदसवोऽल्पका स्युः ॥ ३२ ॥
तदन्यथाढ्याश्च निजोदयैश्चे-
द्भुक्तासुपूर्वं विहितं तदानीम् ।
कृतं यथा स्याच्चरकर्ममिश्रं
कर्म ग्रहाणामुदयान्तराख्यमिति ॥ ३३ ॥

इत्थं शिरोमणौ प्रौढ्या यदुक्तमुदयान्तरम् ।
तद्वासनां निराकर्त्तुमुद्यतोऽस्मि विदां वर ॥ ३४ ॥

सम्पाते क्रान्तिवृत्तनाडीवृत्तसंपातरूपः स्थिरमेषादिः स्थि-
राश्विनीनक्षत्रादिर्मध्यार्कयुक्तश्चास्ति । अनन्तरं तस्य प्रवहप-
श्चिमभ्रमणेन विषुवाख्यस्वाहोरात्रवृत्तैकभ्रमाद्भ्रमः स्यात् त-
दैव सर्वक्रान्तिवृत्तप्रदेशानां भसञ्ज्ञकानामपि स्वस्वाहोरात्र-
वृत्तैकभ्रमात्स एवैको भभ्रमः । स्वस्वाहोरात्रवृत्तं चक्रकलारू-
पतुल्यासुभिरस्ति । अथ यदैको भस्य भ्रमस्तदा मध्यार्कचिन्हं
चलक्रान्तिवृत्ते स्वमेषादेः प्राक् चलितं किंचिन्न्यूनमध्यार्कग-
तिकलाभिर्निरक्षक्षितिजेन तदग्रं तदधः किंचिन्न्यूनगतिक-
लोत्पन्नकालेनान्तरितमस्ति यदा तु तच्चिन्हं संपूर्णगतिकला-
भिश्चलितं तदा तदुत्पन्नकालेन तन्निरक्षोदयमानेनोर्ध्वं स्थिर-
मेषादिः स्वाहोरात्रवृत्ते गच्छति तन्मध्यार्कचिन्हं च निरक्षक्षि-
तिजस्थं स्यादेव उदयाङ्गतिकलाचलनेनैव पुनस्तदुदयकालस्य
सावनदिवसत्वेनाङ्गीकारात् ॥

व्यक्षोदयाद्यैरसुभिर्भवृत्ते ऽर्को मध्यगत्या चलितस्तदैव ।
तैरेव नूनं प्रवहानिलेन स नीयते व्यक्षकुजे कृतान्तः ॥ ३५ ॥

तेन तच्चिन्हस्योदयादुदयपर्य्यन्तमेकः सावनो दिवसस्तन्मध्ये
वास्तवं नाक्षत्रमिदं मध्यार्कगतिकलोत्पन्नासवो भभ्रमश्चैक
इति । अत्रेदमप्यवधेयं यदा मध्यार्कचिन्हं चलक्रान्तिवृत्ते चलितं
तदा चलक्रान्तिवृत्तमप्ययनांशगत्या चलितमिति तच्चिन्हमेक-
दिनजायनांशगत्यूनयुक्तगतिकलातुल्यं संपाततश्चलितमिति ।
अत्यल्पासन्निर्वाच्यां तामयनांशगतिं त्यक्त्वा केवलगत्युत्पन्नासु-
युक्ताश्चक्रकलातुल्यासवः सावनस्वाहोरात्रासवोऽत एव भगव-

ता सूर्येणोक्ताः स्वसिद्धान्ते ।
कुदिनाद्यन्तसंपाताकतो विषुवल्लिप्तिकाः ।
तदन्तरं यदल्पन्तो रविगत्यासवो मताः ॥ ३६ ॥

अतो यदनुपातादेकसावनान्तर्गतनाक्षत्रं तत्तु केवलगतिकलाधिकचक्रकलातुल्यासुरूपमवास्तवं एवं प्रतिसावनं एकोभभ्रमः सम्पातार्कागतगत्युत्पन्नकालस्येति मध्यार्कचिह्नं यदा प्रतिदिनजगतिचलनेन संपाते स्यात् तदैकः संपातभगणस्तन्नाक्षत्रकाल एकभभ्रम एवेति स्वेष्टकाले यावन्तः सावना मध्यगतिचलनादुत्पन्नास्तावन्तो भभ्रमास्तत्संपातागतभगणसङ्ख्याकभभ्रमाश्च। अथ तत्र सम्पातागतो मध्यार्कोऽपीष्टकाले यदि स्यात्तर्हि तदुत्पन्नकालस्येति त्रयाणां योगे वास्तवं नाक्षत्रं सावनाहर्गणे अवास्तवं तु अहर्गणतुल्या भभ्रमाः केवलमध्यार्कभगणसङ्ख्याकभभ्रमाः केवलमध्यार्ककलातुल्यासवश्चेति त्रयाणां योगरूपं यो हि सावनो मध्यमाहर्गणो वास्तवनाक्षत्रैर्विलक्षणैः सिद्धः स तु निरक्षमध्यार्कोदयकालिको वास्तव इत्युच्यते। अवास्तवैरेकरूपैर्नाक्षत्रैर्मध्यमसावनमानाख्यैः सिद्धः स तु तदुदयकालेनेत्यवास्तव इत्युच्यते अथात्रानुपातस्य नियतैकविषयत्वात्प्रकृतेनुपातसिद्धाहर्गणो मध्यमसावनमानैः सिद्ध इत्यवास्तव एव ज्ञेयः वास्तवार्थं तूदयान्तरदानमार्षविरोधेप्यावश्यकमिति चेत् अत्रोच्यते त्वदभिमताऽवास्तववास्तवान्तररूपोदयान्तरदानेन तद्भिन्नेन वा नहि कथं चिदपि वास्तवत्वसिद्धिः तथा हि पूर्वोक्तं वास्तवं नाक्षत्रं खण्डत्रयात्मकं अहर्गणः १ सं० भगणाः १ संपातमध्यार्ककलोत्पन्नासु १ अवास्तवं तु० अहर्गण १ केवलभगण १ के० मध्यमार्ककला १ अत्र वास्तवस्य अवास्तवेन साक-

मन्तरे सप्तविंशत्ययनांशकाले तिथ्यादिषु घटीचतुष्टयं किंचि-
न्न्यूनमधिकं वान्तरं स्यात् । मुञ्जालमतानुयायिनां मते त्वनि-
र्वाच्यमन्तरं स्यादिति महद्वैषम्यम् । निरयनवर्षादौ केवलग-
त्यधिकचक्रकलातुल्यपरवोक्तमध्यममानेनैव सावनाहर्गणसङ्ख्या
भभ्रमतो निरेकेति स्पष्टं वदद्भिः सायनार्ककलातुल्यासुवशा-
त्वोक्तिदुष्टमुदयान्तरमुक्तं तदप्यसत् । वास्तवावास्तवयोर्वास्त-
वभिन्नं यत्किञ्चिदुदयान्तरं कल्प्यते न तद्वशेन कथञ्चिदपि वा-
स्तवाहर्गणसिद्धिः स्वार्षविरोधपक्षे वस्तुतस्तु ये सौरा ये च चा-
न्द्रा ये च सावनास्ते तु चन्द्रार्कयोः क्रान्तिवृत्ते स्वस्वगत्या चल-
नादिष्टकाले चोपपन्ना यथांशभोगात्सौरं गतिकलाभोगात्सा-
वनं चान्द्रं तयोर्द्वादशभागान्तरेणेति परस्परं तेषामनुपातेनान-
यनं वास्तवमेवेष्टकाले ज्ञेयं परं न तथा नाक्षत्रं तस्याहोरात्रवृ-
त्तगत्या चलनादिष्टकाले तदनुपातानर्हत्वान्न तद्वास्तवं गोल-
वास्तवरीत्या तदसिद्धेश्च । सौरादधिमासद्वारा तिथ्यन्ते चान्द्रा-
स्ततोऽवमद्वारा सावनास्तिथ्यन्ते ततोऽवमशेषसम्बन्धाच्च निर-
क्षक्षितिजे मध्यार्कोदयकालिकाः सावनाः कृतास्ते तु वास्तवा
एव स्थूलत्वाप्रसक्तेः तत्काले तदनुपातगतं नाक्षत्रं त्ववास्तवम-
प्यनुपातेन सौरचान्द्रसावनसङ्ख्यानयनार्थं तूपयुक्तं परं नहि
स्वान्तर्गताभ्युद्भनाक्षत्रसम्बन्धादयमप्यवास्तवः सावनाहर्गणः
अन्यथैककालिकयोः सदसन्नाक्षत्रयोर्भेदोऽपि तत्सम्बन्धाभ्यां
तदेकस्य विरुद्धसदसद्भेदकथनानौचित्यप्रसङ्गः तथा चान्द्रसौ-
रा अपि अत्रेदमप्यवधेयं मध्यममानासुतुल्या यत्र वास्तवास्त-
वस्तत्र तदनुपातेन सावनाद्यमवास्तवमुदयासन्नकाले अतो यः
स्पष्टसौरचान्द्रैरधिमासावमैश्च निरक्षमध्यार्कोदयकालिकः सा-

धितोऽहर्गणः स तु तद्गतिजनिरक्षकालोपलक्षितनिरक्षमध्या-
र्कोदयकालसम्बन्धेनापि सिद्धो वास्तव एव नहि सोऽप्यवास्तव-
मध्यमसाधनेन अत्र यः साधितोऽहर्गणः स तूदयकाले निरव-
यवो दृश्यते कथं तस्य अवास्तवत्वं मध्यार्कभुक्ता असव इत्या-
दितदन्तरमित्यन्तग्रन्थानीतोदयान्तरदानादयं स्फुटाहर्गणस्त-
द्रीत्या सावयवः सिध्यति कथं तस्य वास्तवत्वं अतो निरवयवो-
ऽहि तदहर्गणः स कथं मूढैरुदयासन्नकाले स्वीक्रियते यस्तैर्म-
ध्यम उच्यते स तूदयासन्नस्तन्मते तदग्रादुदये कथं तत्र वार-
गणनया वारप्रवृत्तिः स्यात् किं च सौरवर्षादौ रविः शून्यं नो-
दयान्तरदानादयं सङ्गच्छते किं च कक्षायां मध्यगतिजमध्य-
मात्फलान्तरे स्पष्टः फलवासनयास्ति संस्कृतान्ततः स तु कथं
चिदपि न तन्मते प्रतिमण्डलस्थानियतचलितबिम्बात्कोर्णहत्स-
म्बन्धिस्फुटयुक्तेरनिवारितत्वात् । अथ यो ह्यवास्तवैकमानादु-
च्यते न तत्प्रमाणस्तदुदयान्तरमपि ।

सत्यासत्यास्तुमानाभ्यामुद्गमासन्नकालयोः ।
भिन्नप्रमाणसिद्धातो विजातीयौ गणौ तव ॥ ३७ ॥
अस्वन्तरं तु तत्तस्थं नहि मूढ गणान्तरम् ।
विजातीयग्रहान्तर्नाप्येवमस्वन्तरोद्भवम् ॥ ३८ ॥

किं च अद्यतनश्वस्तनयोर्मध्यमार्कयोरसंस्कृतयोरन्तरं गति-
कलाः संस्कृतयोर्नेति महान्विरोधस्तदुदयान्तरदानात् ।

मान्दं तु निचोच्चकवृत्तकेन्द्रं
मध्यो रविस्तच्चलनाङ्कवृत्ते ।
भागे दिनं वर्षमिनस्य भांशै३६०
र्मध्यार्कगत्या कुदिनं वदन्ति ॥ ३९ ॥

यावत्यो गतयः कल्पे तावन्तः सूर्यसावनाः ।
उक्त्यायुक्त्यैव तद्योगे भगणा भभ्रमा अपि ॥ ४० ॥

येर्वास्तवैककुदिनान्तरगः खसृष्टे-
र्भैकभ्रमः सवितृमध्यगतेस्तु कालः ।
बुद्धोऽस्ति सद्गणितवासनयाऽथ तैस्तु
ज्ञातो हि मध्यमरविः खगतेः समानः ॥ ४१ ॥

कालो गतेर्गतिसमं चलनं विना नो
गत्यैव मेषवदनाच्चलनादिह्यातः ।
मध्यार्ककेवलगतेश्चलनं सदैक-
सद्भूदिनेऽस्ति हि रवेरुदयान्तरान्न ॥ ४२ ॥

अस्त्वात्मकं यत्त्वसदस्त्यदो तदग्राद्यं सिद्ध इति प्रकल्प्य ।
मिथ्यैव खेटेऽन्तरमामनन्ति प्रायोऽत्र गोलं न विदन्ति तज्ज्ञाः ॥४३॥

अतः कृताहर्गणो मध्यमसावनेनेत्युदयान्तरसंस्कारणमयुक्तमिति प्रतिभाति आर्षानुक्तेश्च अत्रेदं गोलतत्त्वार्थज्ञैर्मध्यस्थबुद्ध्या निपुणं विभावनीयं एतेन वस्तुस्थितेरनवबोधादहर्गणे अवास्तवत्वभ्रान्त्या स्वज्ञानोत्कर्षकुगर्वप्रौढ्या मन्दप्रतारणद्वारान्यथाकर्त्तुं प्रवृत्तैर्भास्कराचार्यैरेव बलात्सर्वदेवर्षिमतविरुद्धः सद्गोलवासनाविचारवद्भिर्भूतः स्वकल्पितो ऽसदुदयान्तरवासनाविचारः प्रवर्तितस्ततस्तद्विश्वासतोऽन्यैर्नाममात्राभिमानिभिर्वक्तृभिः स्वीकृतोप्ययं शिष्टैरिदानींतनैः शुद्धमार्गप्रवृत्तैः कथंचिदपि नादरणीय इति कृतं जगद्विरोधेन ।

फलार्थं युगमन्वादिकल्पना कदिनादितः ।
खण्ड्याद्यैर्नहि किं तर्हि ग्रहाद्यानयनं ततः ॥ ४४ ॥
कदिनादेः कथं चिन्न कार्यः खेटादिनिर्णयः ।

इत्यर्कशास्त्रप्रामाण्यात्स्पष्टं ज्ञेयं विजानता ॥ ४५ ॥
कृतान्तेस्मिन् ब्रह्मदिनाङ्गता ये सौरवत्सराः ।
प्रोच्य सृष्टेस्ततः कालं सौराब्दैः शेषसंमितः ॥ ४६ ॥
कृतान्ते सृष्टिवक्त्रात्स्युः सौराब्दास्ते गता अमी ।
खचतुष्कयमाद्र्यग्निशररन्ध्रनिशाकराः १९५३७२०००० ॥ ४७ ॥
मध्यमानयनं कार्यमतोनुपतनान्नरैः ।
कृतान्ते तेन खेटाः स्युर्मध्यमा रविपूर्वकाः ॥ ४८ ॥
विनेन्दुपातमन्दोच्चान्मेषादौ तुल्यतामिताः ।
इत्थं ब्रह्मदिनादेर्न भवेत्सृष्ट्यब्दभेदतः ॥ ४९ ॥
द्वादशघ्ना गुरोर्याता भगणा वर्त्तमानकैः ।
राशिभिः सहिताः शुद्धाः षष्ट्या स्युर्विजयादयः ॥ ५० ॥
स्फुटार्कस्य सङ्क्रान्तयो मेषवक्त्रा-
त्क्रमात्तास्वमांतद्वयान्तस्तदानीम् ।
विशुद्धाश्च चैत्रक्रमाच्चान्द्रमासाः
सदा सञ्ज्ञयोदाहृताः प्राङ्मुनीन्द्रैः ॥ ५१ ॥
असङ्क्रान्तिमासो हि चान्द्रोऽधिमासो-
द्विसङ्क्रान्तिमासः क्षयाख्यस्तदानीम् ।
क्षयाख्यः कदा चित्ततः प्राक् च पश्चा-
दवश्यं हि तत्राधिमासद्वयं स्यात् ॥ ५२ ॥
स्फुटैर्लक्षणैर्यैरयं तानि सर्वे-
ष्वपि स्युर्मधोश्चान्द्रमासेषु काले ।
अतोऽयं क्षयः सर्वचान्द्रेष्वपीत्थं
न जानन्ति सद्वासनाज्ञानशून्याः ॥ ५३ ॥
इदानींतनार्थं न शास्त्रं प्रवृत्तं

न सत् कार्त्तिकादित्रयोत्थं तदुक्तम् ।
सुयुक्ता न मुन्युक्तिरप्यत्र शास्त्रे
भवेत्कार्यवर्यस्य याद्दग्विरुद्धा ॥ ५४ ॥
अतः परं श्रीजगदीश्वरस्य ब्रह्माण्डसृष्टिर्विंयतीनपूर्वैः ।
अतीन्द्रियज्ञैश्च सदैकरूपोदिताथ तां वच्मि गुरूपदेशात् ॥५५॥
तावद्ब्रह्माण्डगोलोयं स्वर्णाभोन्तस्तमोवृतः ।
वेदर्त्वष्टाभ्रनागाभ्रदस्रेन्दुत्र्यष्टभूमयः ॥ ५६ ॥
१८७१२०८०८६४०००००० प्रयुतघ्ना वरीवर्ति यस्य कक्षा खकक्षिका ।
यस्यान्तः सर्वदा रश्मिप्रसारोस्ति रवेर्ध्रुवम् ॥ ५७ ॥
तदन्तः प्रवहाकाशवायुगोलो ध्रुवाश्रयात् ।
पश्चिमाभिमुखं शश्वद्भ्रमत्यार्क्षैकर्केन सः ॥ ५८ ॥
दिनेन तौ ध्रुवावत्र याम्योत्तरगतौ स्थिरौ । .
दिक्स्थानरूपौ सततं भगवच्छक्तितः स्थितौ ॥ ५९ ॥
ध्रुवस्थानात्तु तद्गोले वृत्तं यत्खाङ्क ९० भागकैः ।
विषुवन्मण्डलन्तस्मात्ततः स्वस्वापमांशकैः ॥ ६० ॥
अहोरात्राख्यवृत्तानि ध्रुवमध्याद्भवन्ति हि ।
सौम्यध्रुवात्कदम्बस्य स्थानं याम्ये जिनांशकैः ॥ ६१ ॥
याम्यध्रुवात्कदम्बस्य स्थानं सौम्ये जिनांशकैः ।
एवं क्रमान्मिथः षड्भान्तरितौ तौ कदम्बकौ ॥ ६२ ॥
सौम्ययाम्यौ तु तन्मध्यात्तद्गोले प्रवहाभिधे ।
मण्डलं खाङ्कभागैर्यत्तत् स्थिरं क्रान्तिमण्डलम् ॥ ६३ ॥
विषुवत्क्रान्तिवृत्तैक्यात्स्थिरा द्वादश राशयः ।
मेषादयस्तथा भानि कल्पितानि स्थिराणि च ॥ ६४ ॥
सप्तविंशतिसङ्ख्यानि प्राक्क्रमात्क्रान्तिमण्डले ।

तद्गोलोदरगोले तु स्वलग्नोन्यो हि गोलकः ॥ ६५ ॥
भगोलाख्यः स्थूलसूक्ष्माण्यसङ्ख्यानीह भानि च ।
तस्मिन् तिष्ठन्ति गोलोयं कदम्बाभ्यां चलोनिशम् ॥ ६६ ॥
सप्तविंशतिभागैस्तु पश्चात्प्राक् सृष्टितः क्रमात् ।
कदम्बमध्यात्तद्गोले वृत्तं यत्स्वाङ्कभागकैः ॥ ६७ ॥
तन्मुख्यं क्रान्तिवृत्तं स्याद्भगोलचलनाच्चलम् ।
समा द्वादशभागाश्च तस्य द्वादश राशयः ॥ ६८ ॥
मेषादयस्तथा तुल्याः सप्तविंशतिभागकाः ।
अश्विन्यादीनि भानि स्युः फलार्थं प्रक्रमात्किल ॥ ६९ ॥
अश्विन्यादिरयं चात्र रेवत्यन्तमिनोदितः ।
भगणान्तो हि विज्ञेयः स्थिरपौष्णान्तगो नहि ॥ ७० ॥
कदम्बचलितो गोलो भचक्रं तारकाश्रयम् ।
प्रवहानिलबद्धं सत् ध्रुवमध्यवशेन तत् ॥ ७१ ॥
भ्रमतीत्याशयोर्कस्यान्यथा स्वीकृत्य तं बलात् ।
नाशिताः स्वोक्तयो मूढैर्यथार्थाकाशगोलके ॥ ७२ ॥
सृष्ट्यादौ विषुवद्वृत्ते मेषादिः क्रान्तिवृत्तगः ।
भगोलचलनात्क्रान्तिवृत्तस्य चलनादयम् ॥ ७३ ॥
अवश्यं चलभागैस्तु पश्चात्प्राक् चलति क्रमात् ।
एवं भगोलके वृत्तं कदम्बाद्यज्जिनांशकैः ॥ ७४ ॥
ध्रुववृत्तं तु तज्ज्ञेयं भगोलचलनाच्चलम् ।
अथ तद्वृत्तगं यद्यद्भवेद्भं स्वभ्रुतिभ्रमात् ॥ ७५ ॥
ध्रुवस्थानस्थितं तत्तद् ध्रुवभं स्वस्वकालजम् ।
चलांशाभावकाले तु यद्भं ध्रुवगतं ततः ॥ ७६ ॥
इदानीं चलितं तद्धि चलांशैः स्वभ्रुतौ किल ।

पूर्वरात्रौ तु तद्यत्र प्रत्यक्षं दृश्यतेथ तत् ॥ ७७ ॥
पररात्रौ न तत्रस्थं दृश्यते भ्रमतो बलात् ।
ध्रुवतारां स्थिरां ग्रन्थे मन्यन्ते ते कुबुद्धयः ॥ ७८ ॥
साकं तैस्तु विवादोपि सतां मूढत्वमेवहि ।
ध्रुवस्थानस्थितं यद्यत्कदम्बभ्रमणेन भम् ॥ ७९ ॥
तत्तत्खमध्यगं मेरौ निरक्षे गर्भभूजगम् ।
इत्यस्ति सौरशास्त्रोक्तिः सदैव स्थूलसूक्ष्मभम् ॥ ८० ॥
ध्रुवत्वं कल्पयित्वांधाः प्रवदन्त्यधुना स्थिरम् ।
एवमुक्तो भगोलोयं तद्गोलान्तरगाश्च ये ॥ ८१ ॥
ग्रहाणां गोलकाः सप्त तानन्यांश्च वदाम्यहम् ।
खखशैघ्र्याख्यमान्दाख्यविपाताख्यभपातजाः ॥ ८२ ॥
परोच्चपरनीचाख्यगोलाः स्पष्टक्रियोचिताः ।
तत्सर्वाश्रय एवैको ग्रहगोलोस्ति खे महान् ॥ ८३ ॥
तत ऊर्ध्वं ततश्चाधः कथञ्चिन्न ग्रहो भवेत् ।
एवमाकाशगोलास्ते पवनाख्या ग्रहाश्रयाः ॥ ८४ ॥
अधोधः क्रमतो ज्ञेयाः शनेश्चन्द्रावधि स्थिताः ।
आदौ शनिर्गुरुस्तस्मात्ततो भौमस्ततो रविः ॥ ८५ ॥
ततः शुक्रो बुधस्तस्मात्तत इन्दुरिति स्फुटम् ।
द्वयोर्द्वयोरन्तरे तु सिद्धविद्याधरादिजाः ॥ ८६ ॥
आकाशगोलास्तिष्ठन्ति स्वरूपाङ्गाश्च ये सदा ।
सर्वत्र लग्नगोलेषूर्ध्वगः स्वचलनाद्ध्रुवम् ॥ ८७ ॥
अधःस्थं चालयत्येव मध्यस्थः स्वोर्द्ध्वगं नहि ।
स्वगत्या चलितस्याधः स्थितस्याप्यूर्ध्वतद्गतेः ॥ ८८ ॥
वशतश्चलनात्तस्य चाविरुद्धगतिद्वयम् ।

स्वगत्या चलितस्यैवमूर्ध्वस्थस्य कथं चन ॥ ८९ ॥
नाधःस्थगतितस्तस्य चलनं त्वन्यरोधतः ।
भगोलान्तरतोधोधः संलग्ना एव ते ऽखिलाः ॥ ९० ॥
ज्ञेयाः कदम्बसम्बन्धाद्भगोले चलिते सति ।
चलितास्तेपि खेटानां गोलाः स्युस्तद्वशात्तथा ॥ ९१ ॥
परस्परं तदाकाशसम्बधादथ चेन्दुतः ।
दूरेन्तरे हि वक्रेस्तु गोलोऽव्यक्तस्त्वधःस्थितः ॥ ९२ ॥
भूमिनिर्गतवक्रेस्तु योऽत्यूर्ध्वगमनावधि ।
गोलोसौ वह्निगोलाख्यस्तदूर्ध्वं सोऽनलो नहि ॥ ९३ ॥
वह्न्यूर्ध्वं खे महर्लोको जनस्तस्मात् ततस्तपः ।
तदूर्ध्वमिन्द्वधः सत्यः सन्ति ते वै सनातनाः ॥ ९४ ॥
भुवं विनाऽन्यानखिलानधःस्थानतीवशक्त्या प्रवहः पराशाम् ।
प्रचालयत्येष भगोलकोपि तथातिशक्त्या स्वपराम्बरस्थान् ॥ ९५ ॥
सर्वानधःस्थानयनांशगत्या तदन्यगोला न तथा स्वशक्त्या ।
ते केवलं स्वाम्बरगभ्रमाथमन्याम्बरस्थभ्रमणाय न स्युः ॥ ९६ ॥
स्थिरं प्रत्यक्चलं भाति खस्थं प्राग्भूभ्रमान्नृणाम् ।
प्रवहो व्यर्थ इत्यार्यभटोक्तेः पृष्ठिवोत्तरम् ॥ ९७ ॥
यत्सर्वतो निराधारं खोर्ध्वदेशगतं गुरु ।
स्वस्थान एव तन्नूनं पततीत्यपि निर्णये ॥ ९८ ॥
असद्भूभ्रमणं चैर्घ्यामनार्षं स्वीकृतं तु यत् ।
भूमावपि ध्रुवायोगात्तत्तुच्छं प्रवहे गते ॥ ९९ ॥
एवं हि कालबोधार्थं गोलाः सप्तग्रहोद्भवाः ।
गोलोष्टमो भगोलाख्यो नवमः प्रवहाभिधः ॥ १०० ॥
प्रवहादग्निपर्यन्तं पवनाख्याम्बरोद्भवाः ।

गोलाः स्वच्छतरास्तद्वद्दृढा रूपविवर्जिताः ॥ १०१ ॥
यथा विरूपो भूवायुस्तथेन्दोः प्रवहान्तजाः ।
विरूपा निर्मलाकाशा अपि स्युः पवनाभिधाः ॥ १०२ ॥
विरलाविरलाङ्गा तावनेकैकगतिभ्रमौ ।
पवनौ ये ऽनिलाकाशाः प्रोक्तशून्याम्बरेतराः ॥ १०३ ॥
जात्याऽभिन्नाश्च ते सर्वे ऽमूर्त्ताः स्वस्थानगाश्चलाः ।
स्वगत्या परगत्या च भ्रमन्त्येष्वखिलेष्वपि ॥ १०४ ॥
दृगर्ककिरणानां तु नावरोधः कथं च न ।
रवेरासन्नकिरणास्तत्प्रभावो महान् ततः ॥ १०५ ॥
दूरे चाल्प इति ज्ञेयस्तारतम्यात्करोद्भवः ।
एवं भगोलावधिकस्तत्प्रकाशस्ततो न सः ॥ १०६ ॥
ब्रह्माण्डगान्धकारस्था गोलाः सर्वेथ तेषु च ।
भगोलान्तं तमोनष्टं भवेद्यच्च तदूर्ध्वगम् ॥ १०७ ॥
यथास्थितं स्वतः श्याममसमर्थकरान्वितम् ।
नीलं संदृश्यतेऽत्रत्यैस्तम एवाम्बरस्थितम् ॥ १०८ ॥
लोके नीलं नभ इति प्रतीतिरिह सभ्रमा ।
समन्तात्सप्तगोला ये ब्रह्माण्डादग्निगोलकम् ॥ १०९ ॥
केन्द्रं तेषामेकमेव सर्वकेन्द्रं तदुच्यते ।
तत्केन्द्रतो यस्य केन्द्रं भिन्नमस्ति स एव कौ ॥ ११० ॥
जलगोलो महान् स्वच्छतरो ज्ञेयो महार्णवः ।
यं भित्वोर्ध्वं सदार्कस्य करा गच्छन्ति चाम्बरम् ॥ १११ ॥
यथायथा भ्रमत्युच्चं रवेस्तायं तथातथा ।
जलार्णवोपि सततं भ्रमतीत्थं वदन्ति हि ॥ ११२ ॥
मृदम्ब्वग्न्यनिलाकाशपिण्डोयं पाञ्चभौतिकः ।

कपित्थफलवद्वृत्तः सर्वकेन्द्रेऽखिलाश्रयः ॥ ११३ ॥
स्थिरः परेशशक्त्यैव सर्वगोलादधःस्थितः ।
मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति ॥ ११४ ॥
बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिकाम् ।
नान्याधारोथ मूर्त्तश्चेत्तस्याधारोथ तस्य च ॥ ११५ ॥
अन्यस्ततोन्य एवेत्थमनवस्थाभयात्किल ।
अन्ते गत्वा च या शक्तिः कल्प्यावश्यं सदैव सा ॥ ११६ ॥
आदावेव प्रकल्प्येशशक्तिर्लाघवतो भुवि ।
गुरुत्वात्पतनं भूमेर्मन्यन्ते ते कुबुद्धयः ॥ ११७ ॥
अधोधः क्रमतो बौद्धाः क्षिप्तं यद्गुरु खेथ तत् ।
भूमिं यातीति दृष्ट्वापि प्रवदन्त्यन्यथा यतः ॥ ११८ ॥
कुत ऊर्ध्वं कुतश्चाधो वृत्ते भूमेः समाम्बरे ।
अचलेयं सदा विश्वम्भराद्यष्टिरनन्तजा ॥ ११९ ॥
यथायथोत्तरदिशं नरः स्वस्थानतः किल ।
याति भूमौ ध्रुवं चोच्चं पश्यतीह तथातथा ॥ १२० ॥
वर्तुलत्वं तु निर्णीतं तज्ज्ञैस्तेन कुगोलके ।
अल्पकायतया लोकाः स्वस्थानात्सर्वतो दिशम् ॥ १२१ ॥
पश्यन्ति वृत्तामप्येनां चक्राकारां वसुन्धराम् ।
जलादूर्ध्वं जलान्तस्य कुपृष्ठं त्वर्द्धमेव तत् ॥ १२२ ॥
उदितं विबुधैः सत्यं यावनं त्वृच्यते मतम् ।
जलार्णवस्य गोलोस्ति महानल्पस्ततस्य सः ॥ १२३ ॥
भूगोलो जलमग्नोस्ति जलाद्बहिरपि स्थितः ।
तत्राधिको जलान्तःस्थो बहिः स्वल्पोस्ति गोलवित् ॥ १२४ ॥
जलार्णवस्य भ्रमणाद्यद्बहिस्तज्जलान्तरे ।

यज्जलान्तः स्थितं तत्तु वह्निः स्याद्भूमिखण्डकम् ॥ १२५ ॥
जलादूर्ध्वमर्धकुपृष्ठं यदा स्या-
त्तदा भूमिपिण्डोम्बुपृष्ठोर्ध्वगोल्पः ।
अधःस्थोधिकश्चेति युक्त्येदमुक्तं
मतं यावनं चापि देवर्ष्यभिन्नम् ॥ १२६ ॥
भूगताब्धिजलं क्षारं लवणार्णवसञ्ज्ञकम् ।
तद्वेलावलयस्थानां समन्तात् यत्र कुत्र चित् ॥ १२७ ॥
भुवौच्चमत एवात्र दृश्यते न समं किल ।
निरक्षवृत्ततत्तीरगतानां तत्समस्थितिः ॥ १२८ ॥
इदानीं तद्विसम्वादादार्षोक्तं दृष्टिजं हि तत् ।
भूम्यन्तरपुटाः सप्त नागासुरसमाश्रयाः ॥ १२९ ॥
दिव्यौषधिगतोपेता रम्याः पातालभूमयः ।
अनेकरत्ननिचयो जाम्बूनदमयो गिरिः ॥ १३० ॥
भूगोलमध्यगो मेरुरुभयत्र विनिर्गतः ।
उपरिष्टात्स्थितास्तत्र केन्द्रेशाद्या महर्षयः ॥ १३१ ॥
अधःस्थादसुरास्तद्वत् द्विषन्तोन्योन्यमाश्रिताः ।
भूमौ मेरोर्नवत्यंशैर्निरक्षाभिधमण्डलम् ॥ १३२ ॥
तत्र लङ्कान्तु भूमध्ये प्रकल्प्याथ ततः सदा ।
प्राच्यां तु यमकोटिः स्यात्पश्चिमे रोमकाभिधम् ॥ १३३ ॥
अधः सिद्धपुरं सौम्ये सुमेरुर्याम्यगोपरः ।
भूवृत्तपादविवराण्येवं स्थानानि षट् सदा ॥ १३४ ॥
उपर्यात्मानमन्योन्यं कल्पयन्त्येषु सर्वदा ।
समक्षत्रस्थिताधः स्यादेवं सर्वत्र भूवृतौ ॥ १३५ ॥
मन्यन्ते खे यतो गोलस्तस्य क्वोर्ध्वं क्व चाप्यधः ।

मेरुद्वयस्थानरेखावृत्तं यच्च स्वदेशगम् ॥ १३६ ॥
तद्धि याम्योत्तरं ज्ञेयं स्वदेशस्थं च तद्वशात् ।
सुधिया प्राक् परे ज्ञेये त्वित्थं देशविभागतः ॥ १३७ ॥
व्यक्षोत्तरे तु सर्वेषां सुमेरुः सौम्यदिक्स्थितः ।
याम्येप्येवं परो मेरुः कुसञ्ज्ञो याम्यदिक्स्थितः ॥ १३८ ॥
लङ्कायामुदयोऽर्कस्य यमकोट्यां तदा भवेत् ।
दिनार्द्धमस्तकान्तस्तु सिद्धपुर्य्यां तदा भवेत् ॥ १३९ ॥
रात्र्यर्द्धं रोमके चेत्थं व्यक्षदेशे सदैव हि ।
एवं निरक्षदेशेषु यतः प्राच्यां तु यद्भवेत् ॥ १४० ॥
ततस्तच्च प्रतीच्यां च नियतं गोलविद्वर ।
भूवृत्ततुर्यभागे ह्युज्जयिन्याः प्राक् सदा भवेत् ॥ १४१ ॥
यमकोटिस्ततः पश्चादवन्ती नैव किं तु सा ।
लङ्कैव पश्चिमे चैवं व्यक्षादन्यत्र दृश्यते ॥ १४२ ॥
अथात्र गोलपरिधेर्ज्ञानं व्यासावबोधतः ।
परिधिज्ञानतश्चैवं व्यासज्ञानं फलं तथा ॥ १४३ ॥
गणितादत्यसद्धं सूक्ष्मं सूर्यसिद्धान्तसंमतम् ।
यन्मानतः परिच्छिन्ने व्यासे ज्ञाते ततः किल ॥ १४४ ॥
न ज्ञायते तत्परिधिश्चैवं परिधिबोधतः ।
नैव विज्ञायते व्यासस्तन्मानेन कथं च न ॥ १४५ ॥
सुसूक्ष्मरीतितः प्राज्ञैरवर्गपदवद् ध्रुवम् ।
अतः कृपालुनात्र श्रीसूर्येणैवान्यथा कृतम् ॥ १४६ ॥
व्यासवर्गाद्दशगुणात्पदं भूपरिधिर्भवेत् ।
व्यासः स्यात्परिधेर्वर्गाद्दिग्भक्ताच्च पदं त्विह ॥ १४७ ॥
रुद्राहतव्यासदलोत्थवृत्ते व्यासोत्क्रमज्यावशतः क्रमज्या ।

या तत्समोयं परिधिः सुसूक्ष्मो व्यासैकमानाद्दशमूलरूपः ॥१४८॥
दिक्संगुणव्यासकृतिर्ययोः स्यात्
घातस्तयोर्योगदलोत्थवृत्ते ।
तदल्पतुल्योत्क्रमशिञ्जिनीं च
दत्वा क्रमज्यामितरेखिका या ॥ १४९ ॥
स्यात्तत्समो वा परिधिस्त्वनेकोत्क्रमज्ययाप्यत्र स एव बोध्यः ।
अनेकतद्वृत्तवशाद् बुधेंद्रैस्तदेकघातोत्थपदप्रसिद्ध्या ॥ १५० ॥
समश्रुतेस्तुल्यचतुर्भुजस्य क्षेत्रस्य यस्यास्ति फलं खचन्द्राः ।
तद्वाङ्करेखासम एव रूपव्यासेतिसूक्ष्मः परिधिर्मदिष्टः ॥ १५१ ॥
* रूपव्यासे खाङ्गतुल्यान्विभागान्
कृत्वा वृत्तं भास्करीयैर्विलेख्यम् ।
तत्र च्छिन्नव्यासखण्डप्रमाणं
वृत्तं त्यक्त्वा शेषकं यच्च तत्र ॥ १५२॥
किञ्चिन्न्यूनैः सार्द्धनागै ८ । २८ । ४५।३६ र्विभागै-
र्नातः सम्यक् भास्करोक्तप्रकारः ।
व्यासाद्वृत्तस्योदितः सम्यगस्मा-
दार्षोक्तो दिग्रेखिकामूलरूपः ॥ १५३ ॥
चक्रलिप्तावृतौ के† चिद्रसाद्र्यष्टाङ्ग ६८७६ विस्तरम् ।
नियतं कल्पयित्वाऽज्ञाः सौरे स्थूलत्वदूषणम् ॥ १५४ ॥
वदन्ति शिल्पवित्प्रोक्तवृत्तसंमापनादिह ।

---

* अत्र विशेषः ।

व्यासात्परिध्यानयनं श्रीभास्करस्यैव सूक्ष्ममिति कमलाकरोपि जानाति । परन्त्वत्र श्रीसूर्य्यभक्त्या तदानयनं खण्डयति । श्रीभास्करस्यानयनं सूक्ष्ममित्येतदर्थं द्रष्टव्या मच्छोधिता लीलावती ।

† श्रीसूर्य्यसिद्धान्तटीकाकारेण रङ्गनाथाभिधेन स्वकृतटीकायामुक्तम् ।

स्फुटं सौरप्रतीत्यर्थं कुरु तन्मुखभञ्जनम् ॥ १५५ ॥
व्यासस्य वर्गवर्गाच्च पञ्चघ्नादष्टभाजितात् ।
पदं क्षेत्रफलं ज्ञेयं फलाद्व्यासो विलोमतः ॥ १५६ ॥
अथ वा परिधेर्वर्गवर्गात् खाङ्केदुभाजितात् ।
पदं क्षेत्रफलं चाऽस्मात्परिधिस्तु विलोमतः ॥ १५७ ॥
पदं रेखात्मकं ग्राह्यं वास्तवं यदि चान्तरात् ।
पदस्यानयनं स्वेष्टं तर्हि तद्गुणितात्कुरु ॥ १५८ ॥
रामा नवाब्ध्यब्धियोर्का ३ । ९ । ४४ । १२ । दशानां मूलमुच्यते ।
रूपव्यासे तु परिधिर्दशमूलमितः स तु ॥ १५९ ॥
इष्टव्यासेन गुणितः स्वेष्टव्यासे प्रजायते ।
शून्यं सप्ताब्धयस्तर्कदस्रा रामाः फलं भवेत् ॥ १६० ॥
रूपव्यासे निजव्यासवर्गघ्नं स्वस्य तद्भवेत् ।
शून्यं रामेषवः शून्ययमा वेदेषवो हताः ॥ १६१ ॥
व्यासेन तत्कृतिर्वात्र फलमेवमनेकधा ।
कथं चिन्नियतव्यासे परिधिर्नियतो नहि ॥ १६२ ॥
योजनानि शतान्यष्टौ भूव्यासो द्विगुणानि तु ।
नन्देषुखेषवः ५०५९ । स्वाष्टाग्नयो ३८ भूपरिधिर्भवेत् ॥ १६३ ॥
पुराणसौरागमभूः सदैका
तद्योजनानां किल मानभेदात् ।
सङ्ख्याविभेदः कथितः स्वतन्त्रैः
शिरोमणौ तूक्तमिदं विरोधात् ॥ १६४ ॥
यल्लोकभूयोजनकानुपातानीतं तदार्षं किल भूमिमानम् ।
येऽल्पज्ञतुष्ट्यै प्रवदन्ति तेऽत्र जानन्ति नार्षं गणितप्रकारम् ॥१६५॥
याम्योत्तरं स्वदेशस्थं निरक्षाभिधमण्डले ।

वृत्तं यत्र विलग्नं स्यान्निरक्षः स्वस्य तत्स्थलम् ॥ १६६ ॥
यावत्स्वदेशादक्षांशाः स्वीययाम्योत्तरे त्वथ ।
मेरुर्यावन्नवभागास्तथा तैर्लम्बभागकैः ॥ १६७ ॥
मेरुमध्याच्च यद्भूमौ वृत्तं भूपरिधिः स्फुटः ।
लम्बज्याघ्नस्त्रिजीवाप्तोऽतः स्वभूपरिधिः स्फुटः ॥ १६८ ॥
एवं मेरूदयस्थानाद्वृत्तं लङ्कागतं हि तत् ।
स्वरेखानगराणां तु वृत्तं रेखाभिधं किल ॥ १६९ ॥
यत्र स्वाक्षांशकैस्तुल्या रेखा वृत्तेऽक्षभागकाः ।
स्वीयं तदेवरेखाख्यं नगरं नेतरत्ततः ॥ १७० ॥
स्पष्टभूपरिधौ स्वीयं स्थानं यावच्च योजनैः ।
स्वीयं देशान्तरं ज्ञेयमथ तच्चोच्यतेऽन्यथा ॥ १७१ ॥
पश्चिमे रोमकाख्याच्च दिग्दि २२ भागैः पुरं किल ।
खालदात्ताभिधं चास्ति व्यक्षस्थं तद्गतं किल ॥ १७२ ॥
मेरूदयस्थानसक्तरेखावृत्तं च यत्ततः ।
स्वदेशावधि ढलांशाः स्पष्टभूपरिधौ स्वकाः ॥ १७३ ॥
एवं स्वरेखानगरे ढलांशाश्च सदैव हि ।
अर्केन्दवो ११२थ साक्षा स्वस्वदेशस्थानजा इमे ॥ १७४ ॥

काबुले ढ ०१०४ । ० अ० ३४ । ४० मदावादे ढ ०१०८ । २० अ० २३ । ० । खम्भादूते ढ १०६ । २० । अ० २२ । २० बुरहानपुरे ढ १११ । ० । अ० २१ । ० उज्जयिन्यां ढ ११२ । ० अ० २२ । १ । लाहोरे तू १०६ । २० अ० ३१ । ५० इन्द्रप्रस्थे तू ११४ । १८ अ० २८ । १२ अर्गलापुरे ढ ११५ । ० अ० २६ । ३५ सोमनाथे ढ १०६ । ० अ० २२ । ३५ विज्यापुरे ढ ११८ । ० । अ० १७ । २० काश्यां ढ ११७ । २० अ० २६ । ५५ गोलकुण्डे ढ ११४ । १६ अ० १८ । ४

लखनौरे तू ११४ । १३ अ० २६ । ३० अजमेरौ तू १११ । ५ अ० २६ । ५ देवगिरौ तू १११ । ० अ० २० । ३० मुलताने तू १०७ । ३५ अ० २८ । ४० कनौजे तू ० ११५ । ० अ० २६ । ३५ माण्डवे तू १२१ । ० अ० २७ । ० काश्मीरे तू १०८ । ० अ० ३५ । ० समरकन्दे तू ९९ । ० अ० ३८ । ४० ॥

लङ्कायां शून्यमक्षांशा लम्बांशाः खाङ्कसंमिताः ।
अर्केन्दवोथ तूलांशा मेरौ खं लम्बभागकाः ॥ १७५ ॥
तूलांशकाश्च खाङ्कास्तु पलांशाः सम्भवन्त्यतः ।
रेखास्वदेशयोस्तूलान्तरं गतिकलागुणम् ॥ १७६ ॥
खषट्रामैर्हृतं तत् स्यात्स्वीयं देशान्तरं किल ।
कलाद्यं तु धनर्णं स्याद्रेखातूलेऽधिकोनके ॥ १७७ ॥
स्वस्वतूलाङ्गहृत् लित्यं तिथौ तु दशसङ्गुणम् ।
तूलान्तरपलानि स्युर्धनर्णानि विलोमतः ॥ १७८ ॥
एकः स्वमध्याङ्कनतांशवेधाद्रेखास्थितोऽन्यो गणितात्स्फुटोऽर्कः ।
तदेकमेषोङ्गवयोर्विलिप्तान्तरं तु तद्भुक्तिकलोद्धृतं वा ॥ १७९ ॥
घट्यादि देशान्तरकं धनर्ण-
मूनेऽधिके वेधरवौ तिथौ तत् ।
षड्घ्नं लवास्तैस्तिथिवद् द्विरुद्राः ११२
संस्कारितास्तूललवाः स्वदेशे ॥ १८० ॥
प्रोक्तरेखाख्यवृत्ते तु स्थानान्यर्कोक्तशास्त्रतः ।
राक्षसालयदेवौकःशैलयोर्मध्यसंस्थिताः ॥ १८१ ॥
रोहितकमवन्ती च तथा सन्निहितं सरः ।
एवमन्यान्यपि ज्ञेयान्यन्यशास्त्रप्रमाणतः ॥ १८२ ॥
तत्र देशान्तरज्ञानं सौरोक्तं योजनैर्यथा ।

अतीत्योन्मीलनादिन्दोर्दृक्सिद्धिर्गणितागतात् ॥ १८३ ॥
यदा भवेत्तदा प्राच्यां स्वस्थानं मध्यतो भवेत् ।
अप्राप्य वा भवेत्पश्चादेवं वापि निमीलनात् ॥ १८४ ॥
तयोरन्तरनाडीभिर्चन्द्याङ्कपरिधिस्फुटम् ।
षष्ट्या विभज्य तद्देशान्तरं स्याद्योजनैः स्वकम् ॥ १८५ ॥
भूमेः स्पष्टपरिध्याप्तं लिप्तागतिगुणं च तत् ।
कलादि तत् फलं प्राच्यां ग्रहेभ्यः प्रविशोधयेत् ॥ १८६ ॥
रेखाप्रतीचोसंस्थानात् प्रक्षिपेत्स्युः स्वदेशजाः ।
षष्टिवर्गै३६००र्गुणे तानि फलानि व्यत्ययात्तिथौ ॥ १८७ ॥
स्वभूमिपृष्ठस्थितदृष्टिचन्हात् खाङ्कै९०स्तु वृत्तं क्षितिगर्भभूजम् ।
स्वीयं पृथिव्यां च ततश्च भूमिव्यासार्द्धमानान्तरितं कुवृत्तम् ॥१८८॥
तत्स्वीयभूपृष्ठकुजं तदत्र स्पृष्ट्वैव यत्स्वीयकुपृष्ठचिह्नात् ।
सूत्रन्तु यावद्ग्रहगोलकं तद्भ्रमेण वृत्तं ग्रहगोलकेपि ॥ १८९ ॥
तत्स्वीयपृष्ठक्षितिजं च तत्र स्थितं तु विम्बं खचरस्य नूनम् ।
द्रष्टा स्वभूपृष्ठजचिह्न एव पश्यत्यतो नान्तरितं कथं चित् ॥१९०॥
स्वभूमिपृष्ठोर्ध्वगदृष्टिचिह्नात्स्पृष्ट्वैव यद्भूमिजपृष्ठवृत्तम् ।
गतं समन्ताद्ग्रहगोलगर्भे तद्वृत्तमस्तोदयजं कुजं हि ॥ १९१ ॥
तथा ततोप्यग्रगदृष्टिसूत्रवशेन नीलाम्बरगोलकेपि ।
समंततस्तद्भ्रमणेन वृत्तं यत्पूर्ववृत्तात्समसूत्रसिद्धम् ॥ १९२ ॥
तथैव यद्भूमिजपृष्ठवृत्तस्पर्शेन वृत्तं विहितं च भूमौ ।
इयं तदस्तोदयजं वदन्ति जनस्तु भूभूजगमेव विम्बम् ॥ १९३ ॥
नीलाम्बरीयक्षितिजस्वरूपासक्तं सदा पश्यति दृष्टिजैक्यात् ।
नीचोच्चभूमेर्वशतः कुसंस्थोदयास्तभूजं हि विभिन्नमस्मात् ॥ १९४ ॥
अवनौ गगनं समंततः सततं लग्नमिवावलोक्यते ।

क्षितिपृष्ठनिवासिमानुषस्थितिजं तद्गुरवो वदन्त्यतः ॥ १९५ ॥
यथायथोर्ध्वं स्वकुपृष्ठचिह्नात्स्वदृष्टिचिह्नं च तथातथा हि ।
स्वपृष्ठभूजादध एव भूजमस्तोदयाख्यं भवतीह नूनम् ॥ १९६ ॥
स्वभूमिपृष्ठस्थितदृष्टिचिह्नं
यस्याथ तस्य स्वकुपृष्ठभूजम् ।
तदेवदृग्जं तु सदोदयाख्य-
कुजं स्वदृक्चिह्नविभेदतोऽन्यत् ॥ १९७ ॥
विचित्रदृक्चिह्नवशाद्सार्ध्यं
खस्थं ग्रहाणां गणितं च तेन ।
स्वल्पान्तरात्तद्विबुधैः कुपृष्ठाद्दे-
वोदितं दृक्फलनिर्णयार्थम् ॥ १९८ ॥
ऊर्ध्वं कुगोलादध एव चाग्नेर्भूवायुरस्यत्र सदैव शीतम् ।
महत्कुतः कैरपि योजनैस्तद्वाष्पाम्बुदाद्यं जनयत्यपूर्वम् ॥१९९॥
तद्वाष्परूपं कथयामि सम्यक्
यतोऽन्यवैचित्र्यमपीह खस्थम् ।
अग्न्यम्बुवायुप्रभवाः सदोर्ध्वं
वाष्पाः कुपृष्ठाद्गगनं प्रयान्ति ॥ २०० ॥
अनेकवर्णं वियतीन्द्रचापं ग्रहात्समन्तात्परिवेष उक्तः ।
तथैव भानां पतनं च विद्युत् तथैव गन्धर्वपुरं विचित्रम् ॥ २०१ ॥
ये केतवो रिष्टफलप्रदाः खे-
म्बुदाश्च भूकम्प इहास्ति लोके ।
मारीमहाख्याकरकाप्रपाता-
द्यं सर्वमित्थं किल वाष्पतोऽत्र ॥ २०२ ॥
विरलावयवैर्वाष्पैर्मिश्रितैः सूर्यरश्मिभिः ।

सूक्ष्मान्तरज्या स्यादित्येतद्वियोज्यवियोजकयोः पूर्वरूपयोरेवान्तरमन्तरज्येत्युपपन्नम् ॥ अत्र वयं तु ब्रूमः । समावनौ हि त्रिज्याव्यासार्द्धेन वृत्तं कृत्वा तच्चक्रकलाङ्कितं समचतुर्भागाङ्कनेन पूर्वापरयाम्योदग्रेखाभ्यामङ्कितं च विधेयम् । तत्र पूर्वरेखातः सव्यक्रमेण लघुचापज्यामपसव्यक्रमेण वृहच्चापज्यां च भुजरूपां परिधिस्पृष्टां दत्वा लघुचापसम्बन्धिकोटिज्या च लघुचापज्याग्राद्दक्षिणोत्तररेखापर्यन्तं कार्या । ततो वृहच्चापज्यामूलस्पृष्टपूर्वरेखाप्रदेशाल्लघुचापज्यातुल्यरेखा च लघुचापकोटिज्यारेखावधिका कार्या । तद्रेखाद्दक्षिणोत्तररेखान्तरं वृहच्चापकोटिज्यास्ति । ततः परिधिस्पृष्टलघुवृहच्चापज्याग्रयोस्तिर्यग्रेखा च कार्या तेनोत्पन्नमैक्यचापसम्बन्धिक्षेत्रं । भुजज्यैक्यं भुजः कोटिज्यान्तरं कोटिरुक्ततिर्यग्रेखाकर्णः अथ कर्णोयमेवैक्यचापसम्बन्धिक्रमोत्क्रमज्यारूपभुजकोटिभ्यामपि संभवतीति ते चात्र ज्ञातव्ये । तदर्थमेतत्कर्णाग्रस्पृष्टपरिधिप्रदेशात् षड्भान्तरितपरिधिप्रदेशपर्यन्तं पूर्वापररेखावद्व्यासरेखां कृत्वा तद्रेखातश्च पूर्वरेखातो भुजज्यादानवत्कर्णद्वितीयाग्रं यावद्रेखान्या कार्या । सा चैक्यचापक्रमज्या भुजरूपास्ति । अथ तन्मूलतत्कर्णाद्याग्रयोरन्तरं व्यासरेखागतमैक्यचापोत्क्रमज्यामितं कोटिरूपं चास्ति । अथाभ्यामपि स एव प्राक् साधितः कर्ण उत्पद्यते । अत्र प्रत्यक्षकर्णस्यार्द्धमैक्यचापखण्डस्य ज्या स्यादस्यास्मैक्यचापज्यासम्बन्ध्युत्क्रमज्याज्ञानतोपि त्रिज्योत्क्रमज्यानिघ्नतेर्दलस्येत्यादिना संसिद्धिरतो ज्ञातपूर्वभुजकोव्यवगतैक्यचापखण्डज्यातोपि विलोमविधिनैक्यचापज्यासिद्धिश्च । सा यथा चापद्वयसम्बन्धिभुज-

योगान्तरज्यासाधनार्थं क्षेत्रम्




ज्याकोटिज्ययोराद्यद्वितीयपदप्रथमाक्षरोपलक्षणपूर्वकमसङ्क-राथं पङ्क्त्योर्न्यासः आज्या १ आको १ । द्विज्या १ द्विको १ अत्र भुजज्यैक्यकोटिज्यान्तरयोर्वर्गौ । आज्याव १ आज्याद्विज्या २ द्विज्याव १ । आकोव १ आको द्विको २ द्विकोव १ अनयोर्योगः कर्णवर्गः

आज्याद्विज्या २ आको द्विको २ त्रिव २

अत्र भुजज्याकोटिज्यावर्गयोगस्य त्रिज्यावर्गत्वेन पङ्क्त्योराद्यन्त्यखण्डचतुष्टययोगे द्विगुणत्रिज्यावर्गतुल्यत्वं स्पष्टं । अथास्य मूलार्द्धमैक्यचापार्द्धस्य ज्येति मूलार्द्धस्य च वर्गचतुर्थांशमूलसमत्वाद्गृहीतोऽस्य चतुर्थांशः आज्याद्विज्या $\frac{1}{2}$

आको द्विको $\frac{1}{2}$ त्रिव $\frac{1}{2}$ अयं द्वि कोटिज्याघातोनज्याघातयुतत्रिज्यावर्गरूपभाज्यस्य दलरूपः अस्य मूलमैक्यचापार्द्धस्य ज्येत्यस्यास्यैक्यचापोत्क्रमज्यात्रिज्याघातदलमूलरूपत्वेन निश्चयाद्भाज्य एव ज्ञातस्त्रिज्योत्क्रमज्याघातरूपोयं आज्याद्विज्या १ आकोद्विको १ त्रिव १ त्रिज्याभक्तो जात ऐक्यचापोत्क्रम-

ज्यारूपः $\frac{\text{आज्याद्विज्या १ आको द्विको } \dot{\text{१}} \text{ त्रिव १}}{\text{त्रि १}}$ त्रिज्यातः शुद्धो जात

ऐक्यचापकोटिज्यारूपः

$$\frac{\text{आ ज्या द्विज्या } \dot{\text{१}} \text{ आको द्विको १}}{\text{त्रि १}}$$ अस्य वर्गः

$$\frac{\text{आज्या द्विज्याव १ आज्याद्विज्याअकोद्विको } \dot{\text{२}} \text{ आकोद्विकोव १}}{\text{त्रिव १}}$$ त्रिज्यावर्गाच्छु-

द्धो जात ऐक्यचापज्यावर्गः

$$\frac{\text{आज्याद्विज्याव } \dot{\text{१}} \text{ आज्या द्विज्याआकोद्विको २ आकोद्विकोव } \dot{\text{१}} \text{ त्रिवव १}}{\text{त्रिव १}}$$ अत्र भा-

ज्ये चत्वारि खण्डानि तत्र चतुर्थं त्रिज्यावर्गवर्गात्मकं खण्डमन्य-
था साध्यते। आद्यभुजज्याकोटिज्यावर्गयोगो हि एकस्त्रिज्या-
वर्गः आज्याव १ आकोव १ द्वितीयभुजज्याकोटिज्यावर्गयोगो
हि द्वितीयः द्विज्याव १ द्विकोव १ अनयोर्घातस्त्रिज्यावर्गवर्गः
आज्या द्विज्याव १ आज्याद्विकोव १ आकोद्विज्याव १
आकोद्विको व १ अत्र वर्गघातस्थले घातवर्गः समत्वेन गृ-
हीतः एवं चतुर्थखण्डस्यैतादृग्रूपत्वेन सस्थितौ धनर्णखण्ड-
साम्यान्नाशे कृत ऐक्यचापज्यावर्गोऽयं

$$\frac{\text{आज्याद्विकोव १ आज्याद्विज्याआकोद्विको } \dot{\text{२}} \text{ आकोद्विज्याव १}}{\text{त्रिव १}}$$ अत्र मध्यख-

ण्डे ज्याद्वयकोटिज्याद्वयघातयोर्घातो द्विघ्नोऽस्ति स च परस्पर-
भुजज्याकोटिज्याघातयोर्घातेन द्विगुणेन सम इत्ययं वा

$$\frac{\text{आज्याद्विकोव १ आज्याद्विकोद्विज्याआको } \dot{\text{२}} \text{ द्विज्याआकोव १}}{\text{त्रिव १}}$$ अस्य मूलमै-

क्यचापज्येयं

$$\frac{\text{आज्याद्विको १ द्विज्याआको } \dot{\text{१}}}{\text{त्रि १}}$$ अत उपपन्नं मिथः कोटिज्यकानिघ्न्या-

विति। एवमन्तरचापज्यानयने चोक्तवत्त्रिज्यावृत्तं कृत्वा तत्र
पूर्वरेखात इष्टैकदिशि चापयोर्भुजज्ये भुजरूपे परिधिसंस्पृष्टे

कार्ये। तथा तदग्राभ्यां तत्सम्बन्धिकोटिजीवे च कोटिरूपे द-क्षिणोदग्रेखासंस्पृष्टे च कार्ये। तेन च समुत्पन्नमन्तरचापसम्बन्धिस्त्रैतं भुजज्यान्तरं भुजः कोटिज्यान्तरङ्कोटिस्तद्वर्गयोगपदं तदग्राभ्यां तिर्यग्रेखाकर्णः अथ कर्णोयमेवान्तरचापसम्बन्धिक्रमोत्क्रमज्यारूपभुजकोटिभ्यामपि सम्भवतीति ते चात्र ज्ञातव्ये। तदर्थमेतत्कर्णैकाग्रं यावत्केन्द्रात्त्रिज्याख्यां रेखां कृत्वा तद्रेखा-तश्च पूर्वरेखातो भुजज्यादानवत्कर्णद्वितीयाग्रं यावद्रेखान्या कार्या सान्तरचापक्रमज्या भुजरूपास्ति। तज्ज्यामूलतदाद्य-कर्णाग्रयोरन्तरं त्रिज्याख्यरेखागतमन्तरचापोत्क्रमज्यामितं कोटिरूपं। आभ्यामपि स एव प्राक् साधितः कर्ण उत्पद्यते। द्रष्टव्यं तद्वेक्षेत्रम्। अत्र कर्णार्द्धमन्तरचापखण्डस्य ज्यास्ति अ-स्यास्त्वान्तरज्यासम्बन्ध्युत्क्रमज्याज्ञानतोपि त्रिज्योत्क्रमज्या-निघ्नतेरित्यादिना संसिद्धिरतो ज्ञातपूर्वभुजकोट्यवगतान्तर-चापखण्डज्यातोपि विलोमेनान्तरचापज्यासिद्धिस्त्वैक्यचाप-ज्यानयनवत्खण्डविन्यासेन सुगमेत्युपपन्नमन्तरचापोक्तमपि। यद्वोक्तवत्त्रिज्याव्यासार्द्धेन कृतवृत्ते दिगङ्कादुभयत इष्टांशान्दत्वा चिह्ने कार्ये तच्चिह्नद्वयस्पृगेका रेखा कार्या सा द्विगुणितेष्टांश-रूपसम्पूर्णधनुःसम्बन्धिसम्पूर्णज्या तदर्द्धमिष्टांशरूपार्द्धधनुस्स-म्बन्ध्यर्धज्येत्यस्या एव गणिते प्रयोजनादिमामेव ज्यात्वेन व्यवह-रन्त्याचार्या इति स्थितिरस्ति। अथ त्रिज्यावृत्ते या सम्पूर्णधनु-स्सम्बधिसम्पूर्णज्या तदर्द्धमिता तु प्रत्यक्षं त्रिज्यार्द्धवृत्ते चक्रां-शाङ्किते तत्सम्पूर्णधनुस्सम्बन्धिसम्पूर्णज्यास्ति अतस्त्रिज्यार्द्धमि-तेन व्यासार्द्धेन वृत्तं दिगङ्कं चक्रांशाङ्कितं च कार्यं तद्वृत्ते दिग-ङ्कादुभयतोभीष्टांशान्दत्वा तदग्राभ्यां या रेखैका विधीयते

सा तु त्रिज्यार्द्धवृत्तीयद्विगुणितेष्टांशरूपसम्पूर्णधनुस्सम्बन्धिस-
म्पूर्णज्याकारापि त्रिज्यावृत्तीयेष्टांशरूपतदर्द्धधनुस्सम्बन्ध्यर्द्ध-
ज्या स्यात् यात्र गणितज्ञानां तदंशज्यात्वेन प्रसिद्धा वरीवर्ति
अतः प्रकृते त्रिज्यार्द्धवृत्ते पूर्वचिह्नात्सव्ये द्विगुणलघुचापांशान-
पसव्ये द्विगुणवृहच्चापांशान्दत्वा चिह्नद्वयं कुर्यात्। ततः पूर्वचि-
ह्नद्वयपर्यन्तं रेखे सम्पूर्णजीवाकारे कार्ये ते तु त्रिज्याखण्डप्र-
माणसिद्धे लघुवृहच्चापज्ये एव त्रिज्यावृत्तीयस्वाभिमतार्द्धजी-
वास्वरूपे भवतः। एवं तच्चिह्नाभ्यां पश्चिमचिह्नपर्यन्तमपि रेखे
कार्ये ते च लघुवृहच्चापसम्बन्धिद्विगुणकोट्यंशरूपसम्पूर्णध-
नुस्सम्बन्धिसम्पूर्णजीवाकारेपि त्रिज्यावृत्तीयस्वाभिमतार्द्धज्या-
कारकोटिज्यारूपे एव भवतः। एवं तच्चिह्नद्वयस्पृगेका रेखा
च कार्या सात्र द्विगुणचापैक्यरूपसम्पूर्णधनुस्सम्बन्धिसम्पूर्ण-
ज्याकारापि त्रिज्यावृत्तीयस्वाभिमतार्द्धज्याकारचापैक्यज्यारू-
पैव स्यात्। तथा च लघुवृहच्चापसम्बन्धिभुजज्याकोटिज्यास-

प्रकारान्तरेण योगान्तरज्यासाधनार्थं क्षेत्रम्




म्बद्धं विषमचतुर्भुजं क्षेत्रमुत्पन्नं। अस्य पूर्वापरचिह्नगामी

त्रिज्यारूप एकः प्रव्यक्तः कर्णस्त्रिज्यार्द्धेन वृत्तकरणात् द्वितीयस्यापैक्यज्यामितस्त्वऽव्यक्तः अलेष्टोत्र कर्णः प्रथमं प्रकल्प्येत्यादिलम्बैक्यवर्गस्य पदमित्यन्तपाव्युक्तग्रन्थेन ज्ञातत्रिज्यारूपकर्णोभयतस्त्रिभुजाभ्यां लम्बाबाधानयनद्वारा चापैक्यज्यारूपद्वितीयकर्णस्याज्ञातस्य ज्ञानं सुबोधं तथाहि त्रिभुजे भुजयोर्योग इत्यादिना लघुचापसम्बन्धित्रिभुजाबाधे $\frac{\text{लभुव १}}{\text{त्रि १}}$ $\frac{\text{लकोव १}}{\text{त्रि १}}$ लम्बस्य $\frac{\text{लभुलको १}}{\text{त्रि १}}$ एवं वृहच्चापसम्बन्धित्रिभुजाबाधे लम्बस्य $\frac{\text{वृभुव १}}{\text{त्रि १}}$ $\frac{\text{वृकोव १}}{\text{त्रि १}}$ $\frac{\text{वृभुवृको}}{\text{त्रि १}}$ अथात्रैकदिक्काबाधान्तरवर्गः

$\frac{\text{लभुवव १ लभुवृभुव २̇ वृभुवव १}}{\text{त्रिव १}}$ लम्बैक्यवर्गस्य

$\frac{\text{लभुलकोव १ लभुलकोवृभुवृको २ वृभुवृकोव १}}{\text{त्रिव १}}$ अनयोर्योगः

$\frac{\text{लभुवृकोव १ लभुवृकोवृभुलको २ वृभुलकोव १}}{\text{त्रिव १}}$ अस्य मूलं चापैक्यज्यारूपो द्वितीयः कर्ण इत्युपपन्नं मिथः कोटिज्यकानिघ्न्यावित्यादि ।

तदन्यलम्बाच्छ्रवणो लघुर्नेत्युक्तं तु यैस्तन्नहि युक्तमत्र ।
भुजैक्यकोणाद्वितिगं भुजैक्यं स्यात्स्वल्पकर्णो न सदान्यलम्बः ॥
तदन्यकर्णत्रिभुजेत्र भूस्थे भुजावधे ये विषमैककोणात् ।
तद्भेदवाचौ तु विलम्बकोटी कर्णः स्वकीयोतिलघुर्मतो मे ॥

एवं चापान्तरज्यास्वरूपमपि त्रिज्यार्द्धवृत्ते चक्रांशाङ्किते प्रथमं पूर्वापररेखाङ्क्या ततः पूर्वचिह्नादेकदिशि लघुवृहच्चापज्ये सम्पूर्णजीवावद्द्येये तदग्राभ्यां तत्कोटिज्ये च पश्चिमचिह्नपर्यन्तं कार्ये तथा तदग्राभ्यामेका तिर्यग्रेखा च चापान्तरज्यारूपा कार्या तथा च त्रिज्याभूमौ लघुभुजज्याकोटिज्यामितौ भुजौ वृहद्भुजज्याकोटिज्यामितौ चेति त्रिभुजद्वयमुत्पन्नं । द्रष्टव्यं पू-

र्वेल्लिखितक्षेत्रम् । अथाभ्यां त्रिभुजाभ्यां लम्बाबाधानयनं यथोक्तवत्कृत्वा लम्बनिपातान्तररूपैकदिक्काबाधान्तरं भुजो लम्बान्तरं कोटिश्चापान्तरज्या कर्ण इति क्षेत्रात्स्पष्टं चापान्तरज्यानयनमप्युक्तखण्डन्यासरीत्या । एवं सन्ति बहवः प्रकाराः प्रौढमार्गप्रवृत्तसुबुद्धीनां । अत्रोर्ध्वाधरपङ्क्त्यनुरोधेन भुजज्याकोटिज्ययोस्तिर्यग्गुणनसिद्धा वज्रवदभ्यासाद्भावनात्वं स्वतः संसिद्धमेवेति लौकिककनिष्ठज्येष्ठभावनावदपूर्वा ज्याभावनेयमुक्ता चापैक्यान्तरज्यासिद्ध्यर्थं नैतावता केवलज्याभावनास्वरूपेण प्रतिपादितबीजगणितीयभावनोपपत्त्या वा तदुपपत्तिः सिद्धा ययैक्यान्तरजीवारूपमसंदिग्धं सुबुद्धीनां । स्वतन्त्रयास्मदुक्त्या तु स्यादितीयमेव ज्याभावनोपपत्तिरन्योक्तस्वरूपमात्रसिद्धभावनोपपत्तिभिन्ना नवीनोक्तेत्यलं पल्लवितेन ।

वृतिस्था च यैः सार्वभौमाश्रयेपि<br>
मदुक्तोदितैक्यान्तरज्योपपत्तिः ।<br>
असद्भावनाख्यस्वकीयोपपत्तौ<br>
प्रदत्तो जलस्याञ्जलिस्तैः सुदुष्टः ॥ ७२ ॥

अथात्र दोर्ज्यावगमाद्वदामि<br>
द्विव्यब्धिपञ्चघ्नभुजांशजीवाम् ।<br>
दोःकोटिजीवाभिहतिर्द्विनिघ्नी<br>
त्रिज्योद्धृता सा द्विगुणांशजीवा ॥ ७३ ॥

दोर्ज्यैकराशिज्यकया विभक्ता<br>
फलस्य वर्गेण विहीनितं च ।<br>
त्रयं भुजज्यागुणितं त्रिनिघ्न-

* योगान्तरज्यासाधनार्थं विंशतिप्रकारा मत्कृता द्रष्टव्याः ।

भुजांशकानामिह शिञ्जिनी स्यात् ॥ ७४ ॥

एवं मिथः सङ्गुणिते घनेन दोःकोटिजीवे विवरं तयोर्यत् ।
युगाहतं संविहृतं त्रिभज्याघनेन वेदघ्नभुजांशजीवा ॥ ७५ ॥

नृपाहतो दोर्गुणवर्गवर्गस्तथेषुनिघ्नो त्रिभमौर्विकायाः ।
कृतेः कृतिस्तद्युतितो विशोध्य नखैर्हृता वर्गसमाहतिं च ॥ ७६ ॥

दोर्ज्यात्रिमौर्व्योरवशेषनिघ्नी दोर्ज्या त्रिभज्याकृतिवर्गभक्ता ।
लब्धं हि पञ्चघ्नभुजांशजीवा विलोमतोऽङ्कत्रिलवादिजीवाः ॥ ७७ ॥

क्रमोत्क्रमज्याकृतियोगमूलाद्दलं तदर्द्धांशकशिञ्जिनी स्यात् ।
त्रिज्योत्क्रमज्यानिहतेर्दलस्य मूलं तदर्द्धांशकशिञ्जिनी वा ॥ ७८ ॥

यदंशार्द्धजीवाकृतिघ्न्युत्क्रमज्या
स्वकीया तदंशोत्क्रमज्याङ्कभक्ता ।
विलब्धात्पदं यत्स्वकीयांशकार्द्ध-
ज्यका सातिसूक्ष्माथ वा स्यात्स्ववृत्ते ॥ ७९ ॥

यद्यत्र भागाः खाङ्केभ्योधिकाः खाङ्कोनितास्व ते ।
तज्ज्यायुक्तत्रिभज्यैव कल्प्या चोत्क्रमशिञ्जिनी ॥ ८० ॥

दोर्ज्यात्रिभागस्य घनं तु तावत्कृत्वा हृतोयं त्रिगुणस्य कृत्या ।
स्वल्पंशयुक्तेन फलेन युक्तो दोर्ज्यात्रिभागः पुनरेव तस्मात् ॥ ८१ ॥

घनादिकेनैव मुहुः स्फुटः स्या-
द्दोर्ज्यात्रिभागस्त्रिलवज्यका स्यात् ।
पूर्वं तु दोर्ज्यावशतो यथोक्त्या
भुजांशखण्डस्य गुणं प्रसाध्य ॥ ८२ ॥

तेनोद्धृता दोर्ज्यकया विनिघ्नी
त्रिज्याकृतिर्व्यासदलस्य वर्गे ।
द्विघ्ने विशोध्यास्य पदस्य खण्डं

भुजांशकाव्ध्यंशगुणस्य मानम् ॥ ८३ ॥
भुजांशकानां प्रथमं ज्यकायाः शाद्योत्र पञ्चांशक आर्यवर्यैः ।
चतुर्गुणात्तद्धननस्त्रिभज्यावर्गेण लब्धं भवतीह चाद्यः ॥ ८४ ॥
आद्याद्धतः पञ्चमभागवर्गस्त्रिभज्यकावर्गविभाजितस्य ।
फलं स्वकीयेन शरांशकेन विहीनितं शेषमितोन्यसञ्ज्ञः ॥ ८५ ॥
अन्योनिताद्येन युतो ज्यकायाः
पञ्चांशकः स्यात् स्फुटपञ्चमांशः ।
आद्यान्यमानं पुनरेव तस्मात्
कृत्वा स्फुटः पञ्चलवो ज्यकायाः ॥ ८६ ॥
यथोक्तरीत्येत्यसकृत्स्फुटोयं ज्येष्वंशकः पञ्चलवज्यका स्यात् ।
रीत्यानयेष्टान्यविभागकानामपीह जीवानयनं विधेयम् ॥ ८७ ॥
इत्थं खाङ्कालपभागेषु त्र्यादिभागज्यकाविधिः ।
प्रोक्तस्त्र्यादिघ्नभागेषु खाङ्कालपेषु तथैव सः ॥ ८८ ॥
श्रीमिर्जोलुक्वेगोपि वृत्तान्तः खेचरीनितः ।
स्वकल्पितं त्रिभागस्य चक्रे ज्यानयनं पुरा ॥ ८९ ॥

अथासां क्रमेणोपपत्तयः ।

त्रिज्याव्यासार्द्धकृतवृत्ते स्वेष्टचापांशदोर्ज्याकोटिज्ये द्विगुणे यथा दोःकोटिरूपे भवतस्तथासम्पूर्णज्यावद्वये तदग्राभ्यां कर्णस्तु द्विगुणत्रिज्यामितो वृत्तव्यास एवेत्येकं जात्यत्रत्रं। अथ तदन्तर्गततत्सजातीयं तदर्द्धजात्यं च द्वितीयं दोर्ज्याभुजः कोटिज्या कोटिस्त्रिज्या कर्ण इति एवमाद्यजात्ये दोःकोटियोगात्कर्णभूमौ योवलम्बः स तु द्विगुणचापांशानां ज्यारूपस्तदुभयतस्य ये जात्ये तेपि तत्सजातीये सजातीयजात्यानुपातयोग्ये भवतः। तत्र द्विगुणचापांशज्या भुजस्तदुत्क्रमज्योनद्विगु-

पाचिज्या कोटिस्थापांशकोव्यंशजद्विगुणज्या कर्ण इति तृतीयं एवं द्विगुणचापांशजोत्क्रमज्या भुजस्तत्क्रमज्यैव कोटिस्थापांश-

द्विगुणचापांशज्यासाधनार्थं क्षेत्रम्




जद्विगुणज्या कर्ण इति चतुर्थं प्रतीत्यर्थं जात्यक्षेत्रदर्शनम् । अत्र द्विगुणचापांशानां ज्याज्ञानार्थं तृतीयजात्ये लघुभूतद्वितीयतद्वज्जात्यादेवानुपातः त्रिज्याकर्णे चापदोर्ज्या भुजस्तदा चापकोव्यंशजद्विगुणज्याकर्णे क इति जातो द्विगुणचापांशज्यारूपो भुज इत्युपपन्नं दोःकोटिजीवाभिहतिरित्यादि अथ वा ज्ञातभुजकोटिज्याभ्यां तुल्यसमासभावनया जाते द्विगुणभुजांशकानां भुजज्याकोटिज्ये $\frac{\text{भुको २}}{\text{त्रि १}}$ । $\frac{\text{भुव १̇ कोव १}}{\text{त्रि १}}$ अत्र पूर्वभुजकोटिज्याभ्यां समासभावनया जाते त्रिगुणभुजांशानां भुजज्याकोटिज्ये $\frac{\text{भुघ ४̇ त्रिवभु ३}}{\text{त्रिव १}}$ । $\frac{\text{को. भुव ३̇ कोघ १}}{\text{त्रिव १}}$ एवं द्विगुणभुजांशानां दोर्ज्याकोटिज्याभ्यां तुल्यसमासभावनया जाते चतुर्गुणितभुजांशानां दोर्ज्याकोटिज्ये $\frac{\text{भुघ. को ४̇ कोघभु ४}}{\text{त्रिघ १}}$ ।

$\frac{\text{भुवव १ भुव. कोव ६̇ कोवव १}}{\text{त्रिघ १}}$ अत्रापि पूर्वदोःकोटिज्याभ्यां समासभावनया पञ्चगुणितभुजांशानां जाते दोर्ज्याकोटिज्ये एवं

$\frac{\text{भुघ. कोव १०̇ कोवव. भु ५ भुववभु १}}{\text{त्रिवव १}}$ । $\frac{\text{भुवव. को ५ भुव. कोघ १०̇ कोवव. को १}}{\text{त्रिवव १}}$

एवं क्रमेण द्वित्र्यब्धिपञ्चगुणितभुजांशानां जीवाः $\frac{\text{भुको २}}{\text{त्रि १}}$ ।

$\frac{\text{भुघ ४̇ त्रिव. भु ३}}{\text{त्रिव १}}$ । $\frac{\text{भुघ. को ४̇ कोघ. भु ४}}{\text{त्रिघ १}}$ । $\frac{\text{भुघ. कोव १०̇ कोवव. भु ५ भुवव. भु १}}{\text{त्रिवव १}}$

अत्र क्रमेण द्व्यादिगुणितभुजांशजज्यानामुक्तगणितोपपत्तिः स्फुटैव सुबुद्धीनां किं लिखनविस्तरेण । अर्द्धत्र्यंशचतुर्थांशपञ्चांशज्योपपत्तिरुच्यते । उक्तदृष्टान्तवृत्ते पूर्वमुक्ता ये द्विगुणचापांशास्तानत्र चापांशान् ये च चापांशास्तान् तदर्द्धचापांशान् प्रकल्प्योपपत्तिरुह्या । चापोत्क्रमज्या भुजस्तत्क्रमज्या कोटिस्तद्वर्गयोगपदं चापार्द्धांशजद्विगुणज्या कर्णस्तदर्द्धमर्द्धज्येति स्पष्टं बालानामपि । द्वितीयप्रकारे तु लम्बनिपातसिद्धपूर्वोक्तचतुर्थजात्यस्य भुजश्चापोत्क्रमज्या तत्क्रमज्या लम्बरूपा कोटिश्चापार्द्धांशद्विगुणज्या कर्ण इति तत्कर्णज्ञानार्थं लाघवात् द्वितीयजात्येनैव साजात्याच्चतुर्थजात्येपि तृतीयजात्यवदनुपातः स च यथा साध्ये चापार्द्धांशज्याभुजे त्रिज्याकर्णस्तदा सिद्धे चापोत्क्रमज्यातुल्ये भुजे क इति सिद्धश्चापार्द्धांशद्विगुणज्यारूपः कर्णस्तदर्द्धं चापार्द्धांशज्या सिद्धा [illegible]र्द्धांशज्याभक्तत्रिज्योत्क्रमज्याहतिखण्डरूपा हरतुल्यलब्धौ भाज्यस्य हरवर्गतुल्यत्वनियमात्त्रिज्योत्क्रमज्यानिहतेर्दलस्य मूलं चापार्द्धांशज्येत्युपपन्नं ।

साजात्यतो ज्यानयनं सुधीभिर्जात्यानुपातादपि कार्यमत्र । येनोक्तवत्तुल्यफलप्रतिर्न जानन्ति नेत्थं जडबुद्धयस्तु ॥ यद्वोत्क्रमज्यावियुता त्रिभज्या उ० १ त्रि १̇ कोटिज्यका तत्कृति उव १ उत्रि २̇ त्रिव १ वर्जिता च । त्रिज्याकृतिः उव १̇ उत्रि २ सा क्रममौर्विकायाः कृतिर्भवेदुत्क्रममौर्विकायाः ॥ कृतौ युता

सा उत्रि २ द्विगुणोत्क्रमज्यात्रिज्याहतिस्तत्पदखण्डसिद्धौ । त-
दङ्घ्रिमूलं परिगृह्य पूर्वप्रकारसिद्धो गदितो द्वितीयः ॥ त्रिज्यो-
त्क्रमज्यानिहतेर्दलस्य मूलस्वरूपानयनप्रकारः । सुसूक्ष्मख-
ण्डानि विहाय तस्यान्तरस्थसुस्थूलजखण्डकेषु ॥ प्रकारयोर्ये
समतां प्रकर्तुं समुद्यतास्ते परिवर्जनीयाः । यतः कलापञ्चक-
जज्यका । १६ । ४० द्वं । ८ । २० मर्द्धज्यका तुल्यविधौ तदीया ॥

अथ तृतीयांशज्यानयने तु पूर्वोक्तत्रिगुणितभुजांशानां ज्या-
स्वरूपं $\frac{\text{भुघ ४̇ त्रिव. भु ३}}{\text{त्रिव १}}$ अत्र केवलभुजांशज्याज्ञानार्थमिदमेव
ज्ञातभुजांशज्यास्वरूपं कल्प्यं केवलभुजांशज्यास्वरूपं तु ज्ञा-
तभजांशतृतीयांशज्यारूपं तथा सति ज्ञातभुजांशज्ययेदं सम-
मिति समच्छेदीकृत्य छेदापगमे च कृते जातौ समपक्षौ
$\frac{\text{त्र्यंघ ४̇ त्रिव त्र्यं ३}}{\text{त्र्यंघ० त्रिव. ज्या १}}$ अत्र चतुर्घ्नमव्यक्तघनं पक्षयोः प्रक्षिप्य तौ त्रि-
घ्नेन त्रिज्यावर्गेण हृतौ कृत्वा जातमाद्यपक्षे त्र्यं १ तत्समे परपक्षे
$\frac{\text{त्र्यंघ ४ त्रिवज्या १}}{\text{त्रिव ३}}$ तु व्यक्तखण्डं ज्यात्र्यंशमितं सिद्धं अव्यक्तखण्डे
त्र्यंशज्याघनाब्धिघातस्त्रिज्यावर्गहृतस्त्रिभक्तस्य तत्र ज्यात्र्यंशं
त्र्यंशज्यामानं स्थूलं प्रथमं प्रकल्प्य तद्घनस्त्रिज्यावर्गहृतः स्वत्र्यं-
शयुतो ज्यात्र्यंशे योजितः सूक्ष्मासन्नं स्थूलं त्र्यंशज्यामानं
स्यात् पुनरेवं तस्य घनादिना ज्ञातं ज्यात्र्यंशज्यैवाऽसकृत्स्फु-
टा तृतीयांशज्या स्यादित्युपपन्नं दोर्ज्यात्रिभागस्य घनमित्या-
दि । चतुर्थांशज्याज्ञाने तु चतुर्गुणितभुजांशानां ज्यास्वरूपमिदं
$\frac{\text{भुघ० को ४̇ कोघ० भु ४}}{\text{त्रिघ १}}$ इदं वा $\frac{\text{भुघको ८̇ त्रिव० भुको ४}}{\text{त्रिघ १}}$ अत्र भुजज्या-
चतुर्थांशज्येति पक्षोयं ज्ञातज्यासम इति यथोक्तवत्समपक्षौ
त्रिज्यापवर्तितौ च अत्र

चघ० को ८ं त्रिचच० को ४ ह०
———————————
त्रि

चघ. को० त्रिवच. को० त्रिवज्या १

चतुर्थांशज्यातत्कोटिज्याद्विघ्नघातस्त्रिज्याभक्तस्तद्द्विगुणांशज्यामानमिति पूर्वं निर्णयात्प्रकृते तत्तु ज्ञातभुजांशानामर्द्धज्यामानं स्यात् तेन तद्गुणः पक्षोयं चव ४ त्रिव २ त्रिज्यावर्गज्ञातज्याघातसम इति तद्गुणभक्त एव त्रिज्यावर्गो ज्यागुणः फलं केवलतत्यक्षसमं तत्र समशोधनेन द्विगुणे त्रिज्यावर्गे तत्फलं विशोध्य शेषस्य मूलार्द्धं चतुर्थांशस्य ज्येत्युपपन्नं यथोक्तं। अथ पञ्चमांशज्याज्ञाने च पञ्चगुणितभुजांशानां ज्यास्वरूपं

भुघकोव ६० कोववभु ५ भुववभु १
———————————
त्रिवव १

भुजज्यावर्गोनस्त्रिज्यावर्गः कोटिज्यावर्ग इति कोटिज्यावर्गस्वरूपमुत्पाद्यैवं वा तत्स्वरूपं

भुघत्रिव २० त्रिववभु ५ भुघ० भुव १६
———————————
त्रिवव १

अत्र पञ्चमांशरूपकेवलभुजज्याज्ञानार्थमिदं ज्ञातज्यासममिति पक्षौ

पंघत्रिव २० त्रिववपं ५ पंघ० पंव १६ त्रिववज्या०
पंघत्रिव ० त्रिववपं ० पंघ ० पंव ० त्रिववज्या १

समत्वात्तयोः पक्षयोरिदं पंघत्रिव २० पंघ० पंव १६

संयोज्य जातौ पक्षौ। ० ० ० त्रिवव० पं ५
पंघत्रिव २० पंघ० पंव १६ त्रिववज्या १

पञ्चगुणितेन त्रिज्यावर्गवर्गेण भजने ऊर्ध्वपङ्क्त्यां पञ्चमांशज्यैव अधःस्थिते तत्तुल्यपक्षे तु व्यक्तखण्डे ज्ञातज्यापञ्चमांशः सिद्धः अत्र पूर्वं स्थूलत्वेन ज्यापञ्चमांशमेव पञ्चमांशज्यां प्रकल्प्य प्रथमाव्यक्तखण्डे आद्यसञ्ज्ञ उपपन्नः द्वितीयाव्यक्तखण्डे त्वन्यसञ्ज्ञ उपपन्न इति तयोर्द्धनर्णयोरन्तरयुक्तो ज्यापञ्चमांशः स्फुटो ज्यापञ्चमांशः स्यात्पुनरमुं पञ्चमांशज्यास्वरूपं प्रकल्प्याद्यान्यद्वारा स्फुटो ज्यापञ्चांश इत्यसकृत्स्थिरो ज्याप-

स्वर्मांशः पञ्चमांशज्येत्युपपन्नं भुजांशकानामित्याद्युक्तम्।

यद्वाङ्ककोटिज्यकयोश्च वर्ग-
वियोगमानं त्रिभजीवयाप्तम्।
नूनं च तत्कोटिगुणस्य मानं
द्विसङ्गुणानाच्च तदंशकानाम्॥ ९० ॥

यत्कोटिजीवादलसंयुतैकराशिज्यकायास्त्रिगुणाहतायाः।
पदं तु तद्भागदलस्य कोटिज्यकावगम्या सुधियात्र नूनम॥ ९१ ॥

त्रिज्यादलं खाग्निलवज्यका स्या-
त्तत्कोटिजज्या च खषट् ६० लवज्या।
वर्गार्द्धमूलं त्रिभमौर्विकायाः
जीवा भवेत् पञ्चकृतांश ४५ कानाम्॥ ९२ ॥

दोर्ज्यात्रिभज्याहतियुक्तहीने त्रिज्याकृती तद्दलतः पदे ये।
भुजेन युग्हीनगृहत्रयस्य दलोत्थजीवे भवतः क्रमात्ते॥ ९३॥

कोटिज्ययोर्दोर्ज्यकयोश्च ये चा-
न्तरे तयोर्वर्गजयोगमूलम्।
तदर्द्धतुल्या भजयोर्वियोग-
खण्डस्य जीवा भवतीह नूनम्॥ ९४ ॥

दोःकोटिजीवान्तरवर्गखण्डान्-
मूलेन तुल्या सुधियात्र वेद्या।
दोःकोटिभागान्तरखण्डजीवा
वच्म्येथ मूलग्रहणं विनापि॥ ९५ ॥

द्विसङ्गुणो बाहुगुणस्य वर्ग-
स्त्रिज्योद्धृतो वान्तरिता फलेन।
त्रिज्यैव दोःकोटिलवान्तरज्या

स्यात्कल्पनैवं बहुधा स्वबुद्ध्या ॥ ९६ ॥
द्विघ्नांशकोटिजीवा वा बाहुकोट्यन्तरज्यका ।
फलमेवोदितं यस्माद्द्विघ्नांशोत्क्रमशिञ्जिनी ॥ ९७ ॥

अत्रोपपत्तिं शृणु यावदेकं राशिज्यकामानमिह प्रकल्प्य । या १ त्रिज्या तदूना द्विगुणोत्क्रमज्या या २ त्रि १ प्रोक्तार्द्धजीवानयनप्रकारात् ॥ अत्रैकराशेर्भवति ज्यकाया वर्गः यात्रि २ त्रिव २ स चाव्यक्तकृतेः समानः । कृते समच्छेदकयोर्विनाशे समे विशुद्धे च समौ च पक्षौ ॥ याव २ या त्रि १ रू० / याव० यात्रि० त्रिव १ अष्टाहतौ तौ त्रिगुणोत्थकृत्या युतौ पुनस्तावपि तुल्यपक्षौ । याव १६ यात्रि ८ त्रिव १ / याव ० यात्रि ० त्रिव ९ समौ च मूलग्रहणादपीमौ या ४ त्रि १ / या ० त्रि ३ त्वव्यक्तमानं समशोधनेन ॥ त्रिभज्यकार्द्धं भवतीह तेनार्द्धिता त्रिभज्या खगुणांशजीवा । वृत्ते षडस्रीयभुजस्तु वृत्तव्यासार्द्धतुल्योऽथ तदर्द्धकं वा ॥ शरवेदलवानां च समे दोःकोटिजज्यके । त्रिज्याकर्णः स तद्द्विघ्नवर्गमूलसमो यतः ॥ अतो विलोमतस्त्रिज्यावर्गार्द्धपदमेव सा । गृहीता सार्द्धराशिज्या तत्कोटिज्या च धीमता ॥ भुजहीनत्रिभस्यात्र भुजज्योनत्रिभज्यका । उत्क्रमज्या भवेदेवं भुजयुक्तत्रिभस्य तु ॥ भुजज्याढ्या त्रिभज्या स्यादुत्क्रमज्या च तद्वशात् । अर्द्धांशज्याप्रकारेण स्फुटा तद्वासना सताम् ॥ वृत्ते तु तन्मध्यगतत्रिजस्य तिर्यग्भुजज्ये सुधियैकपार्श्वे । तत्कोटिजीवे च तदग्रकाभ्यां कार्ये तु दोर्ज्यान्तरमत्र बाहुः ॥ कोटिज्ययोरंतरकं च कोटिस्तयोश्च यद्वर्गजयोगमूलम् । कर्णस्तदर्द्धं भुजयोर्वियोगखण्डस्य जीवेत्युपपन्नमत्र ॥ एवं कोटिज्यां च दोर्ज्यां प्रकल्प्य तज्ज्यादोर्ज्याभ्यां च पूर्वप्रकारात् । बाह्वोर्या स्याद-

न्तरार्द्धस्य जीवा दोःकोट्योः स्यादन्तरार्द्धस्य सा ज्या ॥ दोर्ज्याकोटिज्यान्तरेणैव तुल्ये तत्र स्यातां बाहुकोटीह कर्णः । दोःकोट्युत्थज्यान्तरस्यैव वर्गाद्द्विघ्नान्मूलं तस्य खण्डज्यकातः ॥ द्विघ्नाद्वर्गादेव वेदांशमूलं साम्यात्कृत्वा चोपपन्नं यथोक्तं । पूर्वं प्रोक्ता भावना यान्तरोत्था तद्रीत्यैवं बाहुकोट्यन्तरज्या ॥

यथा दोर्ज्याकोटिज्ये भु १ । को १ अत्र कोटिज्यां दोर्ज्यां तथा दोर्ज्यां च कोटिज्यां प्रकल्प्य अन्तरभावनार्थं न्यासः $\begin{matrix}\text{भु}\ १ & \text{को}\ १\\ \text{को}\ १ & \text{भु}\ १\end{matrix}$

उक्तवद्दोःकोट्यन्तरज्या $\frac{\text{भुव}\ \dot{१}\ \text{कोव}\ १}{\text{त्रि}\ १}$ भुजज्यावर्गोनस्य त्रिज्यावर्गस्य कोटिज्यावर्गत्वादियं वा $\frac{\text{भुव}\ \dot{२}\ \text{त्रिव}\ १}{\text{त्रि}\ १}$ अत्र धनखण्डे त्रिज्ययाहृते लब्धं त्रिज्यैव ऋणखण्डे तु भुजज्यावर्गो द्विघ्नस्त्रिज्याभक्त इत्युपपन्नं यथोक्तम् ।

इयं युगाङ्का गगनेन्दवस्त्र
रूपात्मकः सावयवो गुणोयं २।१४।१० ।
त्रिज्या गुणघ्नीह पृथग्युतोना
त्रिभज्यया वेदहृताद्यलब्धम् ॥ ९८ ॥

ज्या स्याच्चतुःपञ्चमितांशकानां
द्वितीयमष्टादशभागकानां ।
क्रमात्तयोः कोटिगुणौ रसाग्नि-
द्विसप्ततुल्यांशकयोर्ज्यके स्तः ॥ ९९ ॥

खं पञ्चरामाः क्षितिपाः०।३५।१६ स्तथा खं
सप्तेषवो वेदमिताः ०।५७।४ क्रमेण ।
रूपात्मकौ सावयवौ गुणौ तौ
त्रिज्यागुणौ वाथ तयोर्ज्यके स्तः ॥ १०० ॥

शून्यं जिना जिनास्तिथ्यो मुनयो०।२७।२४।१५।७ गुणकास्त्वयम् ।
तद्गुणा त्रिज्यकैवात्र सूक्ष्मरीत्या जिनज्यका ॥ १०१ ॥

वासनां शृणु सविस्तरामिहाष्टादशांशगुणमप्रकटार्णम् ।
संविधाय बुध तेन या १ विहीना त्रिज्यका द्विनगजोत्क्रमजीवा ॥
या १̇ त्रि १ त्रिज्यया च गुणिता दलिता स्याद्वर्ग एव रसरामगु-
णस्य । (यात्रि १̇ त्रिव १) / २ एवमप्रकटमानकृतिर्या सा हृता त्रिभगुण-
स्य दलेन ॥ (याव २) / (त्रि १) तत्कृतिस्त्र रसरामलवानामुत्क्रमोद्भवगुण-
स्य च वर्गः । (यावव ४) / (त्रिव १) । यौ क्रमोत्क्रमगुणस्य च वर्गौ तद्युतेः
(यावव ८ यात्रिघ ८̇ त्रिवव १) / (त्रिव २) पददलं धृतिजीवा ॥ तेन चाप्रक-
टमानकृतिर्याब्ध्या ४ हृता याव ४ युतिसमा नियमात्स्यात् ।
पक्षयोः समहरापगमेपि तौ समावृणगताष्टगुणौ च ॥
(यावव ६४ यात्रिघ ८ त्रिवव ८̇) / (यावत्रिव ६४̇) क्षेपकेण यावव ६४ यावत्रिव १६ त्रिवव ०
सहितावपि तुल्यौ यावत्रिव १६ यात्रिघ ८ त्रिवव १ / यावव ६४ यावत्रिव ४८̇ त्रिवव ० तत्पदग्रहणतोपि
समौ तौ । तत्र चाद्यपद यात्रि ४ त्रिव १ मन्यपदं हि स्यादिदं
याव ८̇ त्रिव ३ च यदि वेदमपीत्थं ॥ याव ८ त्रिव ३̇ तत्पदद्वयवशा-
त्समपृष्ट्वा मानमप्रकटजं द्विविधं स्यात् । तत्र चाद्यमिद
(त्रिघ ५ मू १ त्रि १̇) / ४ मन्यदिदं त्रि १ च त्रिज्यकापरिमितं हि तदत्र ॥
नोचितं त्रिभगुणाल्पकजीवा तस्य येन नियमेन किलास्ति । यस्य
कोटिदलजज्यकयात्र स्यात्समा द्विगुणभागजजीवा ॥ इत्थमत्र
नियमोप्युभयत्र स्यात्परं प्रकृतयोग्यमिदं न । अन्यमानमिह तेन
गृहीतं चाद्यमानममलं गणितज्ञैः ॥ परोक्तशीघ्रपानवबोध-
तस्तद्विश्वासतोत्राल्पधियां सुतुष्ट्यै । वदन्ति ये युक्तिमियं सु-

दृष्टा ज्ञेया यतः संशयकारिणी सा ॥ पञ्चांशकतः प्राग्गणितेन ह्यासन्नं पदं सावयवं गृहीत्वा । २ । १४ । १० तत्त्रिज्यकाघ्नं त्रिभजीवयोर्नं वेदोद्धृतं स्यादृति १८ भागजीवा ॥ दोःकोटिभागान्तरजज्यकायाः प्रकारतो वेदशरांश ५४ जीवा । अत्र स्फुटा पञ्चपदत्रिभज्याहतिस्त्रिभज्यासहिताब्धिभक्ता ॥

धृत्यंशवेदेषुलवज्यकाभ्यां $\frac{\text{त्रि० मू १ त्रि १}}{४}$ । $\frac{\text{त्रिमू १ त्रि१}}{४}$ तत्कोटिभागज्यकयोश्च वर्गौ । $\frac{\text{त्रिव० मू १ त्रिव ५}}{८}$ । $\frac{\text{त्रिवमू १ त्रिव ५}}{८}$ बाणस्वमूलेन २ । १४ । १० युता विहीना गजै ८ र्हृतास्तत्फलयोश्च मूले ॥ ० । ५७ । ४ ॥ ० । ३५ । १६ । त्रिभज्यया संगुणिते क्रमेण द्विशैल ७२ षड्वह्नि ३६ लवज्यके स्तः । एवञ्च वेदेषु ५४ खवह्नि ३० भागज्याभ्याञ्च चापान्तरशिञ्जिनी या ॥ यथोक्तवत्तत्र सदा गुणोयं ० । २४ । २४ । १५ । ७ त्रिभज्यकायाः खलु चोपपन्नः । तद्घ्नत्रिभज्यैव जिनांशजीवा व्यक्ता भवेदासनया बुधानाम् ॥

अन्योन्यदोःकोटिगुणाहतौ ये
त्रिज्योद्धृते तत्फलयोस्तथैव ।
कोटिज्ययोर्दोर्ज्यकयोश्च वर्गा-
न्तरं तु यत्तत्सममेव बोध्यम् ॥ १०२ ॥
यच्चापयोर्वृत्तचतुर्थभाग-
स्थयोश्च वर्गान्तरकं ज्ययोर्यत् ।
तच्चापयुत्यन्तरदोर्लवैक-
ज्याघ्नं द्वितीया नियमाज्ज्यका स्यात् ॥ १०३ ॥
तर्कप्रभृत्यखिलशास्त्रविदोपि विज्ञा
रेखात्ममूलगणितानवबोधतस्ते ।

खल्पान्तरान्मददनिष्टफलस्य भीत्या
भ्रान्त्या भ्रमन्त्यखिलवदल च हृद्भ्रमरीत्या ॥ १०४ ॥
कुण्डाववोधनविधौ परनिर्मितानि
स्थूलप्रकारजनितान्यऽसुभानि बुध्वा ।
तेन त्र्यक्षगणितवासनया प्रसङ्गा-
द्दिक्कुण्डसाधनविधिं प्रवदामि हृद्यम् ॥ १०५ ॥
चतुर्भुजं वृत्तमथार्द्धचन्द्रं
त्रिकोणकं योनिसमाक्यञ्च
षडस्रमष्टास्रमथाष्टपल-
पद्माक्ययं चापि तु पञ्चकोणम् ॥ १०६ ॥
सप्तास्रकं चेति दशैव कुण्डा-
न्युक्तानि तज्ज्ञैरिह सत्फलार्थम् ।
हस्तद्विहस्तादिफलोन्मितानि
तलाङ्गुलैः सिद्धमितैश्च हस्तः ॥ १०७ ॥
षष्ट्यङ्गुलकैरलाङ्गुलं व्यङ्गुलकं तथा ।
प्रतिव्यङ्गुलषष्ट्या स्याद्गणितार्थं क्रमस्त्वयम् ॥ १०८ ॥
तत्रैकहस्तजक्षेत्रफलं जिन २४ कृतेः समं ५७६ ।
द्वित्र्यादिगुणितं तद्धि
द्व्यादिहस्तोद्भवं सदा ११५२ । १७२८ । २३०४ ॥ १०९ ॥
फलमेकभवं द्व्यादिगुणितं द्व्यादिहस्तजम् ।
नहि द्व्यादिकराणाञ्चाङ्गुलवर्गसमं हि तत् ॥ ११० ॥
आयुरारोग्यमैश्वर्यं लभते समबाहुके ।
हृद्यक्षेत्रफले कुण्डे तद्भासो विषमे भुजे ॥ १११ ॥
अतस्त्र्यस्रादिकुण्डेषु यैर्भुजा विषमाः कृताः ।

चतुर्भुजेपि विषमा भुजाः किं न कृतास्त्व तैः ॥ ११२ ॥
एकद्विघ्नफलाभ्यां ये पदे ते बाहुविस्तृती ।
स्यातां समश्रुतौ चाद्ये कुण्डे तुल्यचतुर्भुजे ॥ ११३ ॥
आसन्नमूलग्रहणाद्भुजो २४ व्यास ३२ । ५६ स्तुभुजे ।
एकहस्ते ह्यादिहस्तेप्येवं साध्यं विचक्षणैः ॥ ११४ ॥
अष्टघ्नात्फलवर्गाच्च पञ्चभक्तात्पदात्पदम् ।
अभीष्टे वर्त्तुले कुण्डे व्यासमानं प्रजायते ॥ ११५ ॥
आसन्नमूलग्रहणाद्व्यासः सप्ताश्वि २७ संमितः ।
एकहस्ते तथा ह्यादिहस्ते स्वस्वफलक्रमात् ॥ ११६ ॥
द्वात्रिंश ३२ द्गुणितात्पञ्चभक्ताच्च फलवर्गतः ।
मूलमूलं दलेन्द्वाभे व्यासमानं प्रजायते ॥ ११७ ॥
आसन्नमूलग्रहणादङ्गुलान्यष्टवन्हयः ३८ ।
व्यङ्गुलानि दश १० व्यासश्चैकहस्तेर्द्धचन्द्रके ॥ ११८ ॥
समत्रिभुजकुण्डस्य फलवर्गो नृपाहतः ।
त्रिभक्तस्तत्पदान्मूलं भुजः स्यादथ तत्कृतिः ॥ ११९ ॥
स्वव्यंशसंयुता कार्या व्यासः स्यात्तत्पदं त्विह ।
नृपघ्नाद्वा फलाद्वर्गो भैर्हृतस्तत्पदात्पदम् ॥ १२० ॥
व्यासमानं भवेत्तत्र चैकहस्ते भुजो भवेत् ३६ । २८ ।
कुण्डेङ्गुलादिको व्यासस्त्वासन्नपदतः ४२ । ७ किल ॥ १२१ ॥
फलात् खखाष्टवेद ४८०० घ्नात्त्यद्रिखाद्रिहृतात्पदम् ।
बाहुरश्वत्थपत्राभे योनिकुण्डे प्रजायते ॥ १२२ ॥
समत्रिभुजवत्तस्माद्व्यासोप्यत्राथ हस्तजे ।
कुण्डे भुजो भवे १८।४६।१६ द् व्या-
सो २२।५० ङ्गुलाद्यो गणितेन वै ॥ १२३ ॥

इत्येको योनिकुण्डप्रकारः ।

अथ वाश्वत्थपत्राभे योनिकुण्डे फलं तु यत् ।
षष्टिवर्ग ३६००गुणादस्मात्त्रिद्विदन्तै ३२२३ र्हृतात्पदम् ॥ १२४ ॥
व्यासमानं भवेन्नूनं तद्वर्गार्द्धपदं भुजः ।
हस्तयोनौ व्यासमानमिदं २५ । २२ । २०
बाहुरयं १७ । ५६ । ८ सदा ॥ १२५ ॥

इति द्वितीययोनिकुण्डप्रकारः ।

एवं षडस्रकुण्डस्य फलवर्गोब्धिसंगुणः ।
भैर्हृतस्तत्पदान्मूलं भुजमानं प्रजायते ॥ १२६ ॥
अष्टघ्नाच्च फलाद्वर्गो भैर्हृतस्तत्पदात्पदम् ।
व्यासो भवेद्द्विनिघ्नोसौ भुजो व्यासोथ वानिशम् ॥ १२७ ॥
आसन्नमूलग्रहणाद्धस्तकुण्डे भुजस्त्वयं १४ । ५२ ।
व्यासोङ्गुलात्मकस्चायं २९ । ४६ सम्यक् शिल्पविदोदितः ॥ १२८ ॥
एवमष्टास्रकुण्डस्य फलं पञ्चाद्रि ७५ संगुणम् ।
त्रिपञ्च ५३ विहृतं तस्य मूलं व्यासो भवेद् ध्रुवं ॥ १२९ ॥
शून्यं द्वाविंशतिस्त्र्यूनषष्टिः ० । २२ । ५७ सावयवो गुणः ।
तद्गुणो व्यास एवात्र भुजः स्यादष्टकोणके ॥ १३० ॥
एकहस्ताष्टकोणस्य व्यास आसन्न मूलतः २८ । ३३ ।
भुजश्चायं १० । ५५ तथा द्व्यादिहस्तकुण्डे समानयेत् ॥ १३१ ॥
अथ पद्माख्यकुण्डे तु स्वफलं गुणितं च तत् ।
शून्याङ्गवह्निभि ३६० र्वन्हिवेदसागर ४४३ भाजितम् ॥ १३२ ॥
तन्मूलं व्यासमानं स्यादतश्चाष्टास्रवद्भुजः ।
एकहस्ते च पद्माख्ये व्यासो
२१ । ३८ । २५ वाङ्कस्तथा ८ । १६ । ३८ ङ्गुलैः ॥ १३३ ॥

अथान्यथाष्टपत्रैस्तु पद्मकुण्डं वदाम्यहम्।
शून्यं षट्सप्तमनवो०।६।७।१४। गुणः सावयवस्त्वयम् ॥१३४॥
फलात्तद्गुणितान्मूलं भुजमानं प्रजायते।
सोऽष्टास्रव्यासगुणकोद्धृतो व्यासो भवेद् ध्रुवम् ॥ १३५॥
तत्रैकहस्तपद्माख्ये भुजः सावयवस्त्वयम् ७।३८।५५।
व्यासश्चायं २०।३।१२ द्व्यादिहस्तेष्वेवं साध्यं विचक्षणैः ॥१३६॥
फलं पञ्चास्रकुण्डोत्थं खनागेन्दु १८० गुणं हृतम्।
नगाभ्रभूमिभि १०७ र्लब्धात्पदं व्यासो भवेदिह ॥ १३७॥
शून्यं पञ्चाग्नयो भूपा ०।३५।१६ गुणः सावयवस्त्वयम्।
तद्गुणो व्यास एवात्र भुजः स्याद्गणितेन वै ॥ १३८॥
अथैकहस्तपञ्चास्रे आसन्नपदतस्त्विह।
व्यासो ३१।८ भुजो १८।१८ भवेन्नूनमथसप्तास्रकुण्डके ॥१३९॥
फलाच्छून्याम्बरार्क १२०० घ्नाद्भूद्विनाग ८२१ हृतात्पदम्।
व्यासो भवेद्धि सप्तास्रे भुजोप्येवं ततः सखे॥ १४०॥
शून्यं षड्विंशतिर्भूमिः षड्बाणा गुणकोस्त्ययं०।२६।१।५६।
तद्घ्नव्यासो भुजश्चात्र दोर्व्यासौ चैकहस्तजौ ॥ १४१॥
भु०१२।३५।२१ व्या०।२८।०।५६।

इति कुण्डगणितप्रकारः।

अथ तत्साधनप्रकाराः।

वृत्तकुण्डं निजव्यासदलभ्रमणतो भवेत्।
अर्द्धचन्द्रं निजव्यासदलवृत्तस्य खण्डकम् ॥ १४२॥
त्रिचतुःपञ्चषट्सप्ताष्टास्रकुण्डेषु विस्तृतेः।
अर्द्धेनादौ लिखेद्वृत्तं कार्याः स्वस्वविभागकाः ॥१४३॥
समास्त्वेकैकका रेखा प्रतिभागं वृतौ ततः।

पूर्णज्यावच्च तेन स्यात्स्वस्वकुण्डाश्वकाकृतिः ॥ १४४ ॥
संलग्ना वा भुजा वृत्ते देयास्तद्वशतस्त्विह ।
स्वस्वास्वाकृतिजं कुण्डं यजमानाङ्गुलैर्भवेत् ॥ १४५ ॥
ज्ञाते भुजे वृतावत्र विभागा अप्रयोजकाः ।
विभागज्ञानतश्चैवं भुजास्ते चाप्रयोजकाः ॥ १४६ ॥
समत्रिभुजवत्पूर्वं कृत्वा तुल्यत्रिबाहुकं ।
योनिकुण्डे ततो बाहुत्रयमध्याद्भुजाद्वहिः ॥ १४७ ॥
मण्डलार्द्धत्रयं लेख्यं बाह्वर्धभ्रमणादिह ।
एकार्द्धवृत्तमध्याच्च पार्श्वयोस्तद्भुजाग्रगे ॥ १४८ ॥
कार्ये रेखेथ तत्सक्ते चापे त्यक्त्वावशेषकम् ।
योनिकुण्डं भवेदाद्यमश्वत्थदलयोनिभम् ॥ १४९ ॥
एवं व्यासार्द्धमानेन वृत्तं कृत्वा चतुर्भुजम् ।
भुजतुल्यभुजैस्तत्र स्वेष्टकोणाच्च पार्श्वयोः ॥ १५० ॥
भुजार्द्धकेन्द्रतो वृत्तदले बाह्वर्धमानतः ।
कार्ये भुजाद्वहिस्त्वान्यद्योनिकुण्डं च तद्भवेत् ॥ १५१ ॥
पूर्वं व्यासभुजाभ्यां च यथोक्त्याष्टास्रकं लिखेत् ।
ततस्तद्बाहुखण्डेन बाह्वर्धात्केन्द्रतः किल ॥ १५२ ॥
वृत्तार्द्धं बाहुतश्चोर्ध्वं विलिखेदासमंततः ।
तद्वि तुल्यचतुर्भागं कृत्वा चाद्यतृतीयकौ ॥ १५३ ॥
विभागान्तौ च यौ ताभ्यां तद्बाहुदलमानतः ।
भ्रमणान्मत्स्यमुत्पाद्य तन्मुखं वृत्ततो वहिः ॥ १५४ ॥
यदस्ति तद्गते ताभ्यां विभागाभ्यां च रेखिके ।
तद्बाहुखण्डतुल्ये च समन्तात्तेन तद्भवेत् ॥ १५५ ॥
अष्टपत्रात्मकं कुण्डं पद्माख्यं पद्मवत्कुसम् ।

व्यक्ताव्यक्तोपपत्त्यैव सिद्धं ह्येतन्मयोदितम् ॥ १५६ ॥

द्वितीयपद्मकुण्डेपि साध्यमष्टास्रकं पुरा ।
तद्भुजाद्यन्तचिह्नाभ्यां व्यासार्द्धाङ्गुलमानतः ॥ १५७ ॥

वृत्तत्रिभागभ्रमणान्मत्स्यं कृत्वाथ यद्भुजात् ।
बहिःस्थितं च यन्मत्स्यखण्डं पत्रं तदेव हि ॥ १५८ ॥

एवं प्रतिभुजं पत्रादष्टपत्रोद्भवं किल ।
पद्मकुण्डं भवेद्व्यक्ताव्यक्तवासनया परम् ॥ १५९ ॥

द्व्यादिहस्तेषु कुण्डेषु स्वस्वोक्तभुजविस्तृती ।
कार्ये ताभ्यां यथोक्तयैव यजमानाङ्गुलैः किल ॥ १६० ॥

स्वस्वाकृतिजान्यत्र कुण्डानि प्रभवन्ति च ।
द्व्यादिहस्ताख्यकुण्डेषु फलमूलजिनांशकः ॥ १६१ ॥

प्रकल्प्य वाङ्गुलं तत्र तैर्यथोक्तप्रकारतः ।
एकहस्तोक्तविस्तारभुजाभ्यामेव साधयेत् ॥ १६२ ॥

वासनानवबोधेन बहुधा शुष्कपण्डितैः ।
कृतं सुस्थूलकुण्डानां साधनं तन्न मे मतम् ॥ १६३ ॥

संवादमेत्युक्तफलेन सम्य-
क्तदेव कुण्डं किल सप्रमाणम् ।
नान्यन्मुनीन्द्रोक्तमपीह यस्मा-
त्प्रत्यक्षसिद्धौ नहि वाक्प्रमाणम् ॥ १६४ ॥

अन्तर्बहिः कोणभवं तु कुण्डं द्विघ्नं स्वसंख्याकभुजैरलीकम् ।
यैरुक्तमष्टास्रमहो कथं तैस्त्र्यब्ध्यऽस्रकं चापि तथाहृतं न॥१६५॥

समन्ततः केवलबाह्यकोणैः सिद्धानि वाङ्क्रयुतैर्भवन्ति ।
अब्ध्यस्रवत्त्रोषुषडष्टकोणान्तं नैमिषस्थो नहि वेत्ति चैवम्॥१६६॥

अथ कुण्डवासनोच्यते ।

समकर्णसमचतुर्भुजक्षेत्रफलमूलं हि तद्भुजस्तत्कर्णो व्यास इति तावत्सुप्रसिद्धं तुल्यभुजयोर्वर्गयोगो हि द्विगुणभुजवर्गः । स तु द्विगुणफलतुल्यस्तत्पदं कर्णः फलमूलं तु भुज इत्युपपन्नं यथोक्तं चतुर्भुजे ।

अथ वृत्तफलं तु व्यासवर्गवर्गात्पञ्चगुणादष्टहृतान्मूलतुल्यमिति तद्विलोमेन व्यासः स्यादित्युपपन्नं यथोक्तं वृत्ते ।

अथार्द्धचन्द्रकुण्डं तु वृत्तार्द्धं तत्र द्विगुणफलं वृत्तफलं प्रकल्प्य तदर्द्धमर्द्धवृत्तफलं स्वफलं स्यात् । अतोऽर्द्धचन्द्रे व्यासो द्विगुणफलात्साध्यः द्विघ्नफलवर्गः फव ४ अष्टघ्नः फव ३२ पञ्चभक्तः फव $\frac{३२}{५}$ अस्य मूलमूलं व्यास इत्युपपन्नं यथोक्तम् । अथ समत्रिभुजे क्षेत्रे लम्बादुभयतः सजातीयजात्ये भवतः प्रातिलोम्येन तद्योगे चायतं स्यात् । तत्फलं स्वाभिमतं ज्ञातमेव० तत्रायते भुजो भुजार्द्धं कोटिस्तु लम्बः । स तु भुजभुजार्द्धयोर्वर्गान्तरपदरूप इति मूलाऽग्रहणाद्वर्गद्वारैव भुजकोटिघातरूपायतफले क्रियमाणे फलवर्गोऽयं $\frac{भुवव ३}{१६}$ विलोमेनात्र फलवर्गो नृपाहतस्त्रिभक्तस्तन्मूलमूलं भुज इत्युपपन्नम् । वृत्ते स चायं भुजस्तु द्विगुणा षष्टिभागज्या षष्टिभागज्यावर्गरूपमिदं $\frac{त्रिव ३}{४}$ त्रिज्या तु व्यासार्द्धमित्येवं वा $\frac{व्याव ३}{१६}$ अत्र मूलं द्विघ्नं चतुर्गुणितान्मूलं वा तुल्यमिति चतुर्घ्नं $\frac{व्याव ३}{४}$ तन्मूलं समत्रिभुजभुज इति तद्विलोमेन भुजवर्गाद्वेदहृतात्त्रिभक्ताच्च मूलं स्वल्पांशयुतभुजवर्गान्मूलरूपेण फलितं व्यासः स्यादित्युपपन्नं यथोक्तम् । यद्वा पूर्वोक्तो भुजोयं $\frac{फव १६}{३}$ मू.मू. अस्य वर्गश्चतुर्गुणस्त्रिभक्तोऽस्य मूलं वर्गवर्गो वा षोडशगुणो नवभक्तो $\frac{फव २५६}{२७}$ स मूलम-

त्तं व्यास इति वासनाविदां स्पष्टतरम् । अथाद्ययोनिकुण्डे तु स-
मत्रिभुजमेकं तदेककोणात्पार्श्वयोर्भुजसमव्यासोद्भवे वृत्तार्द्धे त-
था भुजार्द्धोद्भवतुल्यचतुर्भुजार्द्धं चेति तत्फलैक्यं स्वफलं ज्ञात-
मेव तत्रान्यरीत्या फलमेवं भुजप्रमाणं यावत्तावत् या १ अस्मा-
त्समत्रिभुजफलं $\frac{\text{याव १ । ४३ । ५५}}{\text{४}}$ वृत्तार्द्धयोः फलं $\frac{\text{याव ३ । ९ । ४४}}{\text{४}}$
चतुर्भुजफलं $\frac{\text{याव १}}{\text{४}}$ त्रयैक्यं $\frac{\text{याव ५ । ५३ । ३९}}{\text{४}}$ इदं स्वफलेन सम-
मिति पक्षौ $\frac{\text{याव ५ । ५३ । ३९}}{\text{याव० फ ४}}$ अत्राव्यक्ताङ्केनाच्छिन्नं फलं भा-
ज्यमिति गुणहरौ खखार्कैर्गुणितौ जातौ गुण ४८०० हारा ७०७३
वित्युपपन्नं यथोक्तम् । द्वितीयप्रकारे तु समकर्णतुल्यचतुर्भु-
जमकं तथैककोणाश्रितभुजयोर्व्यासरूपयोर्ये वृत्तार्द्धे तदै-
क्यरूपवृत्तं चेति तत्फलैक्यं स्वफलं ज्ञातमेव तत्रान्यरी-
त्या फलमेवं चतुर्भुजकर्णौ हि तद्व्यासस्तत्प्रमाणं यावत् या१
अस्य वर्गार्द्धं चतुर्भुजफलं $\frac{\text{याव १}}{\text{२}}$ अस्य मूलं चतुर्भुजे भुज इति
तत्तुल्यव्यासे वृत्तफलं $\frac{\text{याव० । ४७ । २६}}{\text{२}}$ फलयोर्योगः $\frac{\text{याव १ । ४७ । २६}}{\text{२}}$
स्वफलेन सममितिपक्षौ $\frac{\text{याव १ । ४७ । २६}}{\text{याव० फ २}}$ अत्राव्यक्ताङ्केन द्वि-
गुणं फलं भाज्यमिति गुणहरौ खखाष्टेन्दु १८०० गुणौ गुण३६००
हारा ३२२३ वित्युपपन्नं यथोक्तम् । अथ षडस्रभुजो हि सर्वत्र वृ-
त्तव्यासार्द्धसमस्तत्तुल्य एको भुजो व्यासार्द्धतुल्यौ च द्वाविति स-
मत्रिभुजं तत्तुल्यानि षट् वृत्ते भवन्ति तत्रैकसमत्रिभुजे प्रोक्त-
वत्फलवर्गोयं $\frac{\text{व्यावव ३}}{\text{२५६}}$ अस्य पदं षड्घ्नं सर्वफलमित्ययं वा ष-
ड्वर्गघ्नः सर्वफलवर्गोऽयं $\frac{\text{व्यावव २७}}{\text{६४}}$ अतो विलोमेन फलवर्गो-
ऽब्धिषट्गुणो भैर्हृतस्तन्मूलमूलं व्यासस्तदर्द्धं भुज इति तद्व-
र्गवर्गषोडशभक्त एव फलितः फलवर्गोऽब्धिगुणो भैर्हृत इत्यु-

पपन्नम्। अथाष्टास्रे सार्द्धद्वाविंशति २२।३० भागज्या द्विगुणा भुजोऽस्तीति तावत्सुप्रसिद्धं तत्र शरवेदभागज्यावर्गः $\frac{\text{त्रिव १}}{२}$ अस्य मूलं शरवेदभागज्या त्रि०।४२।२६ त्रिज्यातः शुद्धा जाता शरवेदभागानामुत्क्रमज्येयं त्रि०।१७।३४ त्रिज्योत्क्रमज्यानिघ्ने त्रिव०।१७।३४ दलं त्रिव०।८।४७ स्य मूलं सार्द्धद्विद्विभागज्येति चतुर्गुणादलं त्रिव०।३५।८ मूलं द्विगुणा सार्द्धद्विद्विभागज्याष्टास्रभुजरूपा त्रि०।४५।५४ व्यासार्द्धं त्रिज्येत्ययं वाष्टास्रभुजः व्या०।२२।५७ अत्रैको भुजो भुजः व्यासार्द्धतुल्यौ च द्वौ भुजाविति त्रिभुजं तादृशान्यष्टावष्टास्रे भवन्ति तत्रैकस्य फलं व्याव०।५।१८ अष्टघ्नमष्टास्रे फलं व्यावः०।४२।२४ अतः फलमनेन०।४२।२४ भक्तं तन्मूलं व्यासः स्यादष्टास्रे। तत्र संचारेण फलं पञ्चसप्ततिगुणं त्रिपंचाशद्विहृतं तत्पदं व्यास इत्युपपन्नं यथोक्तम्। अथ पद्म कुण्डे यदष्टास्रं तत्फलमेकं तथा तद्भुजार्द्धोद्भवतुल्यचतुर्भुजान्यष्टसंख्याकान्यष्टास्रे तत्फलं भुजवर्गद्विघाततुल्यं तथा भुजतुल्यव्यासवृत्तस्य फलाष्टांशरूपविषमत्रिकोणफलानि षोडशसंख्याकानि द्विगुणतद्वृत्तफलतुल्यानीति सर्वफलं स्वफलतुल्यं ज्ञातमेव तत्रान्यरीत्या फलमेवं उक्तवदष्टास्रे भुजः व्या०।२२।५७ अस्य वर्ग व्याव०।८।४६।४२ वर्गः व्याvव०।१।१७।३ पंचगुणः व्यावव०।६।२५।१५ अष्टभक्तः व्यावव०।०।४८।२। चतुर्गुणस्यास्य व्यावव०।३।१२।३६ मूलं भुजतुल्यव्यासवृत्तफलं द्विगुणं व्याव०।१३।५२।४२ तथा भुजवर्गद्विघाततुल्यं फलं व्याव०।१७।३३।२४ तथाष्टास्रफलं व्याव०।४२।२४ फलत्रययोगः स्वफलमिदं व्याव १।१३।५० अतो विलोमेन फलमनेन १।१३।५० भक्तं तन्मूलं व्यासस्तत्र सवर्णितो हरः सुखार्थं

गृहीतः ४४३० तेन फलस्य गुणो ३६० हर ४४३ इत्युपपन्नं यथोक्तम् । अत्रैकहस्तपद्मे फलं गुणगुणं हरभक्तं व्यासवर्गः ४६८ । ५ तन्मूलं व्यासः २१ । ३८ । ७ भुजस्य ८ । १६ । ३१ । अष्टास्रफलं ३३० । ४६ । ४४ चतु० १३६ । ५७ । ३७ वृत्त० १०८ । १६ । १३ । अथ द्वितीयपद्मकुण्डोपपत्तिः । अष्टास्रभुजसंभूतात्समत्रिभुजतः फलम् । द्विगुणाष्टास्रकभुजाद्व्यासाद्वृत्तफलं तु यत् ॥ तत्षडंशमितं चान्यत्फलं चान्तरकं तयोः । युक्तं षडंशकफले पत्रस्यैकं फलं भवेत् ॥ तदष्टघ्नं भवेत्पद्मे तच्चाष्टास्रफलं युतम् । यथोक्तमेव पद्माख्ये फलं तत्सकलं यथा ॥ एकहस्ते चैकपत्रे त्रिभुजस्थं फलं २५ । २६ । ४२ । २५ । तथा । फलं वृत्तस्य षष्ठांशे ३० । ५७ । ४२ । २० । तथा तद्विवरोद्भवं ५ । ३० । ५८ । ५५ ॥ तत्षडंशकयोगैकपत्रजं ३६ । २८ ४२ । १५ चाष्टसंगुणम् । पद्मे पत्राष्टकफलं २८९ । ४८ । ३८ भवेत्तत्तेन संयुतम् ॥ यदष्टास्रफलं २८४ । १० । २१ तत्तु इदमं पद्मफलं भवेत् । यथेप्सितं हि तत्सिद्धिरव्यक्तगणितात्तथा ॥ अत्राष्टास्रभुजप्रमाणं यावदेकं या१ त्रिभुजफलवर्गः यावव० । ११ । १५ अस्य मूलं याव० । २५ । ५८ वृत्तषडंशफलवर्गः यावव० । १६ । ४० अस्य मूलं फलं याव० । ३१ । ३७ फलान्तरं याव० । ५ । ३८ वृत्तषडंशफलेन युतमेकपत्रफलं याव० । ३७ । १५ अष्टघ्नमष्टपत्रजं याव ४ । ५८ अथाष्टास्रफलं भुजः या१ हरेणानेन० । २२ । ५७ भक्तो व्यासः $\frac{\text{या १}}{\text{ह० । २२ । ५७}}$ व्यासवर्गः $\frac{\text{याव १}}{\text{ह० । ८ । ४६}}$ अयं त्रिपंचगुणः पञ्चाद्रिभक्तः फलमष्टास्रे याव४ । ५० । ११ इदमष्टपत्रजफलेन युतं जातं पद्मकुण्डफलं याव ८ । ४८ । ११ अतः फलमनेन ८ । ४८ । ११ भक्तं भुजवर्गमानं स्यात्तत्र संचारः । हरेस्मिन् रूपं गुणस्तदा रूपमिते हरे को गुण इति लब्धो गुणः० । ६ । ७ । १४ तद्गुणितकुण्डफलस्य भुज

इत्युपपन्नम् । अथ पञ्चास्रे द्विगुणा षट्त्रिंशदंशज्या भुजोऽस्ति- त्रि०।३५ । १६ वा व्या० । १७ । ३८ इयं द्विगुणा पञ्चास्रे भुजः व्या० । ३५ । १६ अत्र तत्तुल्यभूमौ व्यासार्द्धतुल्यभुजाभ्यां यो ऽवलम्ब- स्तदुभयतस्त्र्यस्रयोरैक्यादायतमुत्पाद्य तत्फलं फलपञ्चमांशरूपं पञ्चगुणं च पञ्चास्रे फलं स्यात् तत्र भुजार्द्धं भुजः व्या० । १७ । ३८ व्यासार्द्धं कर्णस्तद्वर्गान्तरमूलं लम्बः व्या० । २४ । १७ आयते लंबः कोटिर्भुजार्द्धं भुज इति तद्घाते फलमायते व्याव० । ७ । ८ । पंचघ्नं स्वफलं व्याव० । ३५ । ४० अतो विलोमेन फलमनेन० । ३५ । ४०भक्तं व्यासवर्ग इति सवर्णितो हरो गृहीतः २१४० तेन फलस्य गुणो ३६०० हरस्य २१४० विंशत्यापवर्त्तनाद्गुणहरौ १८० । १०७ वेत्यु- पपन्नं यथोक्तम् । द्विगुणा वृत्तमन्वंशज्यका ५२ । ३ । ५२ सप्तास्रके भुजः । षष्टिव्यासार्द्धतः स्वीयकुण्डव्यासार्द्धतोऽस्त्ययं ॥ व्या० । २६ । १ । ५६ । भूर्भुजोऽत्र भुजौ व्यासखण्डतुल्यौ त्रिबाहुके । सप्तघ्नं त- त्फलं कुण्डे फलं व्याव० । ४१ । २ स्यात्तेन तत्फलं । अनेन० । ४१ । २ व्यत्यया‌द्भक्तं व्यासः स्यात्तत्पदं किल ॥ हरे त्वस्मिन् ८२१ गु- णस्थाय १२०० मित्यस्ति फलवासना ॥ अथ वा कुण्डक्षेत्रफलं स्व- गुणगुणितं तन्मूलं भुजो व्यासस्य । स्वल्पासन्नतया ग्राह्यं मूल- मासन्नसञ्ज्ञकं । वस्तुभूतपदज्ञप्त्यै कार्यं रेखात्मकं पदम् ॥ अथ- ष्टोद्धृतायाः करण्यास्य लब्धं तथेष्टं तयोरल्पकं चोत्क्रमज्यां । प्रक- ल्प्याथ लब्धाङ्कइष्टाङ्कयोगार्द्धलेनात्र वृत्तं लिखेत्तद्धृतौ हि ॥ प्र- दत्तोत्क्रमज्यां च तन्मध्यवृत्ते ततस्तत्क्रमज्या च रेखात्मिका या । तदेव स्वरेखात्मकं मूलमत्र भवेत्तत्करण्यास्य कुण्डादिसिद्ध्यै ॥ करण्युक्तिवत्स्वेष्टलब्ध्योः करण्योरपीह प्रसाध्ये पदे रेखिकाख्ये । तयोरल्पिकां चोत्क्रमज्यां प्रकल्प्य तदैक्यार्द्धविस्तारखण्डोत्थ-

वृत्ते । यथोक्त्या क्रमज्यात्मिका रेखिका स्यात्करण्यास्तदेवास्ति मूलस्य मूलम् । इच्छाभीष्टभेदात्पदे नैव भेदो भवेदित्थमार्यैर्भृशं तद्विचार्यम् ॥

कुण्डानां भुजव्यासगुणकाः ।

| चतुर्भुज | वृत्तकुण्ड | अर्द्धचन्द्र | त्रिभुज | प्र. योनि | द्वि. योनि | षडस्र | अष्टास्र | प्र. पद्म | द्वि. पद्म | पञ्चास्र | सप्तास्र | कुण्डानि |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १<br>०<br>० | ०<br>०<br>०० | ०<br>०<br>०० | २<br>१८<br>३३ | ०<br>४०<br>४३ | ०<br>३३<br>३० | ०<br>२३<br>१० | ०<br>१२<br>२४ | ०<br>७<br>७ | ०<br>६<br>७ | ०<br>३४<br>५१ | ०<br>१६<br>३० | भुजगुणकाः |
| २<br>०<br>० | १<br>१५<br>५३ | २<br>३१<br>४७ | ३<br>४<br>४५ | ०<br>५४<br>१७ | १<br>७<br>१ | १<br>३२<br>४० | १<br>२४<br>५४ | ०<br>४८<br>४६ | ०<br>४१<br>५१ | १<br>४०<br>५६ | १<br>२७<br>४१ | व्यासगुणकाः |

इमानि कुण्डानि मयोदितानि
स्वार्षागमप्रोक्तदिशि स्थितानि ।
शुद्धावनौ चाम्बुसमीकृतायां
कार्याणि तज्ज्ञैरिह सत्फलार्थम् ॥ १६७ ॥

यथोदितक्षेत्रफलस्य साम्य-
प्रदर्शनार्थं तु ममैष यत्नः ।
कुण्डस्य होमार्थमिहाथ तन्त्र-
त्योन्यो विशेषः सुधियान्यतन्त्रात् ॥ १६८ ॥

इतिकुण्डविचारः ॥

इत्थं हि जीवानयनप्रभेदैः
प्रत्यंशजज्यानयनं विधाय ।
षष्टित्रिभज्यांतरतो विलेख्याः
प्रत्यंशजीवा व्यवहारसिद्धै ॥ १६९ ॥

# जीवाद्यानार्थं सारणी ।

| चापम् | क्रमज्या | | | | |
|---|---|---|---|---|---|
| १ | १ | २ | ४९ | ४३ | १५ |
| २ | २ | ५ | ३८ | १७ | २९ |
| ३ | ३ | ८ | २४ | ३४ | ०० |
| ४ | ४ | ११ | ७ | २३ | ५४ |
| ५ | ५ | १३ | ४५ | ३८ | २६ |
| ६ | ६ | १६ | १८ | ८ | ५३ |
| ७ | ७ | १८ | ४३ | ४६ | ४१ |
| ८ | ८ | २१ | १ | २३ | २३ |
| ९ | ९ | २३ | ९ | ५० | ४० |
| १० | १० | २५ | ८ | ०० | २३ |
| ११ | ११ | २६ | ५४ | ४४ | ३५ |
| १२ | १२ | २८ | २८ | ५५ | ३१ |
| १३ | १३ | २९ | ४९ | २५ | ४० |
| १४ | १४ | ३० | ५५ | ७ | ४६ |
| १५ | १५ | ३१ | ४४ | ५४ | ४९ |
| १६ | १६ | ३२ | १७ | ४० | ८ |
| १७ | १७ | ३२ | ३२ | ७ | १८ |
| १८ | १८ | ३२ | २७ | ४० | १५ |
| १९ | १९ | ३२ | २ | ४३ | १७ |
| २० | २० | ३१ | १६ | २१ | २३ |
| २१ | २१ | ३० | ७ | २८ | ३८ |
| २२ | २२ | २८ | ३५ | १ | २७ |
| २३ | २३ | २६ | ३८ | ५५ | २६ |
| २४ | २४ | २४ | १५ | ६ | ५४ |
| २५ | २५ | २१ | २५ | ३२ | ४० |
| २६ | २६ | १८ | ८ | १० | ४ |
| २७ | २७ | १४ | २१ | ५६ | ५३ |
| २८ | २८ | १० | ५ | ५१ | २७ |
| २९ | २९ | ५ | १८ | ५२ | ४१ |
| ३० | ३० | ०० | ०० | ०० | ०० |

| चापम् | क्रमज्या | | | | |
|---|---|---|---|---|---|
| ३१ | ३० | ५४ | ८ | १३ | २७ |
| ३२ | ३१ | ४७ | ४२ | ३३ | ४० |
| ३३ | ३२ | ४० | ४२ | १ | ५४ |
| ३४ | ३३ | ३३ | ५ | ४० | २ |
| ३५ | ३४ | २४ | ५२ | ३० | ७ |
| ३६ | ३५ | १६ | १ | ३६ | ५२ |
| ३७ | ३६ | ६ | ३२ | २ | ४२ |
| ३८ | ३६ | ५६ | २२ | ५२ | ४३ |
| ३९ | ३७ | ४५ | ३३ | १२ | १६ |
| ४० | ३८ | ३४ | २ | ७ | २५ |
| ४१ | ३९ | २१ | ४८ | ४५ | १ |
| ४२ | ४० | ८ | ५२ | १२ | ४० |
| ४३ | ४० | ५५ | ११ | ३८ | ४५ |
| ४४ | ४१ | ४० | ४६ | १२ | २९ |
| ४५ | ४२ | २५ | ३५ | ३ | ५३ |
| ४६ | ४३ | ९ | ३७ | २३ | ४९ |
| ४७ | ४३ | ५२ | ५२ | २३ | ५८ |
| ४८ | ४४ | ३५ | १९ | १६ | ५६ |
| ४९ | ४५ | १६ | ५७ | १६ | १० |
| ५० | ४५ | ५७ | ४५ | ३५ | ५९ |
| ५१ | ४६ | ३७ | ४३ | ३१ | ४० |
| ५२ | ४७ | १६ | ५० | १९ | २२ |
| ५३ | ४७ | ५५ | ५ | १६ | १३ |
| ५४ | ४८ | ३२ | २७ | ४० | १५ |
| ५५ | ४९ | ८ | ५६ | ५० | ३० |
| ५६ | ४९ | ४४ | ३२ | ६ | ५६ |
| ५७ | ५० | १९ | १२ | ५० | ३४ |
| ५८ | ५० | ५२ | ५८ | २३ | २० |
| ५९ | ५१ | २५ | ४८ | ८ | १३ |
| ६० | ५१ | ५७ | ४१ | २९ | १४ |

| चापम् | क्रमज्या | | | | | |
|---|---|---|---|---|---|---|
| ६१ | ५२ | २८ | ३७ | ५२ | २४ | |
| ६२ | ५२ | ५८ | ३६ | ४० | ४८ | |
| ६३ | ५३ | २७ | ३७ | २४ | ३३ | |
| ६४ | ५३ | ५५ | ३९ | ३० | ५० | |
| ६५ | ५४ | २२ | ४२ | २८ | ५५ | |
| ६६ | ५४ | ४८ | ४५ | ४९ | ८ | |
| ६७ | ५५ | १३ | ४९ | २ | ५४ | |
| ६८ | ५५ | ३७ | ५१ | ४२ | ४५ | |
| ६९ | ५६ | ० | ५३ | २२ | २० | |
| ७० | ५६ | २२ | ५३ | ५६ | २२ | |
| ७१ | ५६ | ४३ | ५२ | ० | ४४ | |
| ७२ | ५७ | ३ | ४८ | १२ | २७ | |
| ७३ | ५७ | २२ | ४१ | ४९ | ३८ | |
| ७४ | ५७ | ४० | ३२ | ३१ | ३५ | |
| ७५ | ५७ | ५७ | १९ | ५८ | ४३ | |
| ७६ | ५८ | १३ | ३ | ५२ | ३७ | |
| ७७ | ५८ | २७ | ४३ | ५६ | २ | |
| ७८ | ५८ | ४१ | १९ | ५२ | ५४ | |
| ७९ | ५८ | ५३ | ५१ | २८ | १८ | |
| ८० | ५९ | ५ | १८ | २८ | ३९ | |
| ८१ | ५९ | १५ | ४० | ४० | ५४ | |
| ८२ | ५९ | २४ | ५७ | ५४ | १० | |
| ८३ | ५९ | ३३ | ९ | ५८ | ८ | |
| ८४ | ५९ | ४० | १६ | ४३ | ४६ | |
| ८५ | ५९ | ४६ | १८ | ३ | १७ | |
| ८६ | ५९ | ५१ | १३ | ५० | ५ | |
| ८७ | ५९ | ५५ | ३ | ५८ | ४६ | १४ |
| ८८ | ५९ | ५७ | ४८ | २५ | ७ | ५० |
| ८९ | ५९ | ५९ | २७ | ६ | ७ | ४५ |
| ९० | ६० | ०० | ०० | ०० | ०० | ०० |

# ज्याखण्डज्ञानार्थं सारणी ।

| चापम् | क्रमखण्डानि | | | | | चापम् | क्रमखण्डानि | | | | | चापम् | क्रमखण्डानि | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | २ | ४९ | ४३ | १५ | ३१ | ० | ५४ | ८ | १३ | २७ | ६१ | ० | ३० | ५० | २२ | १० |
| २ | १ | २ | ४८ | ३४ | १४ | ३२ | ० | ५३ | ३४ | २० | १३ | ६२ | ० | २९ | ५८ | ४९ | २४ |
| ३ | १ | २ | ४६ | १६ | ३१ | ३३ | ० | ५२ | ५९ | २८ | १४ | ६३ | ० | २९ | ० | ४३ | ४५ |
| ४ | १ | २ | ४२ | ४९ | ५४ | ३४ | ० | ५२ | २३ | ३८ | ८ | ६४ | ० | २८ | २ | ६ | १७ |
| ५ | १ | २ | ३८ | १४ | ३२ | ३५ | ० | ५१ | ४६ | ५० | ५ | ६५ | ० | २७ | २ | ५८ | ५ |
| ६ | १ | २ | ३२ | ३० | २७ | ३६ | ० | ५१ | ९ | ६ | ४५ | ६६ | ० | २६ | ३ | २० | १३ |
| ७ | १ | २ | २५ | ३७ | ४८ | ३७ | ० | ५० | ३० | २५ | ५० | ६७ | ० | २५ | ३ | १३ | ४६ |
| ८ | १ | २ | १७ | ३६ | ४२ | ३८ | ० | ४९ | ५० | ४९ | ५९ | ६८ | ० | २४ | २ | ३९ | ५१ |
| ९ | १ | २ | ८ | २७ | १७ | ३९ | ० | ४९ | १० | १९ | ३३ | ६९ | ० | २३ | १ | २२ | ३५ |
| १० | १ | १ | ५८ | ९ | ४३ | ४० | ० | ४८ | २८ | ५५ | ९ | ७० | ० | २२ | ० | ३४ | २ |
| ११ | १ | १ | ४६ | ४४ | १२ | ४१ | ० | ४७ | ४६ | ३७ | ३६ | ७१ | ० | २० | ५८ | ४ | २२ |
| १२ | १ | १ | ३४ | १० | ५६ | ४२ | ० | ४७ | ३ | २७ | ३९ | ७२ | ० | १९ | ५६ | ११ | ४३ |
| १३ | १ | १ | २० | ३० | ९ | ४३ | ० | ४६ | १९ | २६ | ५ | ७३ | ० | १८ | ५३ | ३७ | ११ |
| १४ | १ | ० | ५ | ४२ | ६ | ४४ | ० | ४५ | ३४ | ३३ | ४४ | ७४ | ० | १७ | ५० | ४१ | ५७ |
| १५ | १ | ० | ४९ | ४७ | ३ | ४५ | ० | ४४ | ४८ | ५१ | २४ | ७५ | ० | १६ | ३७ | २७ | ८ |
| १६ | १ | ० | ३२ | ४५ | १९ | ४६ | ० | ४४ | २ | १९ | ५६ | ७६ | ० | १५ | ४३ | ५३ | २४ |
| १७ | १ | ० | १४ | २७ | १० | ४७ | ० | ४३ | १५ | ० | ९ | ७७ | ० | १४ | ४० | ३ | २४ |
| १८ | ० | ५९ | ५५ | ३२ | ५७ | ४८ | ० | ४२ | २६ | ५२ | ५८ | ७८ | ० | १३ | ३५ | ५६ | ५२ |
| १९ | ० | ५९ | ३५ | ३ | २ | ४९ | ० | ४१ | ३७ | ५९ | १४ | ७९ | ० | १२ | ३१ | ३५ | २४ |
| २० | ० | ५९ | १३ | ३८ | ६ | ५० | ० | ४० | ४८ | १९ | ४९ | ८० | ० | ११ | २७ | ० | २१ |
| २१ | ० | ५८ | ५१ | ७ | १५ | ५१ | ० | ३९ | ५७ | ५५ | ४१ | ८१ | ० | १० | २२ | १२ | १५ |
| २२ | ० | ५८ | २७ | ३२ | ४९ | ५२ | ० | ३९ | ६ | ४७ | ४२ | ८२ | ० | ९ | १७ | १३ | १६ |
| २३ | ० | ५८ | ३ | ५३ | ५९ | ५३ | ० | ३८ | १४ | ५६ | ५१ | ८३ | ० | ८ | १२ | ३ | ५८ |
| २४ | ० | ५७ | ३६ | ११ | २८ | ५४ | ० | ३७ | २२ | २४ | २ | ८४ | ० | ७ | ४६ | ४५ | ३८ |
| २५ | ० | ५७ | १० | २५ | ४६ | ५५ | ० | ३६ | २९ | १० | १५ | ८५ | ० | ५ | २१ | १९ | ३१ |
| २६ | ० | ५६ | ४२ | ३७ | २४ | ५६ | ० | ३५ | ३५ | १६ | २८ | ८६ | ० | ४ | ५५ | ४६ | ४८ |
| २७ | ० | ५६ | १३ | ४६ | ४९ | ५७ | ० | ३४ | ४० | ४३ | ३८ | ८७ | ० | ३ | ५० | ४१ | १४ |
| २८ | ० | ५५ | ४३ | ५४ | ३४ | ५८ | ० | ३३ | ४५ | ३२ | ४६ | ८८ | ० | २ | ४४ | २६ | २१ |
| २९ | ० | ५५ | १३ | १ | १४ | ५९ | ० | ३२ | ४९ | ३४ | ५३ | ८९ | ० | १ | ३८ | ४१ | ० |
| ३० | ० | ५४ | ४१ | ७ | १९ | ६० | ० | ३१ | ५९ | २१ | १ | ९० | ० | १ | ३२ | ५३ | ५३ |

अथात्र जीवानयने भुजांशा ये तज्ज्यका कोष्ठगतास्ति सिद्धा।
श्रमं विनैवानयनोद्यतानां ज्योतिर्विदां ज्यागणितोपलब्ध्यै ॥१७०॥
लवादधश्चेत्कलिकादिकं स्यादतीतभोग्यान्तरखण्डकघ्नम्।
षष्ट्या हृतं तद्युतयातजीवा जीवा भवेत्साभिमता सुखार्थम्॥१७१॥
या ज्या विशुद्धा भवति ज्यकाङ्का-
स्तच्चापमंशात्मकमस्ति सिद्धम्।
शेषं तु षष्ट्या गुणितं विभक्तं
ज्यकान्तरेणात्र कलादि लब्धम्॥ १७२॥
युतं लवाद्यं भवतीह चापं
कलीकृतं तद्धि कलात्मकं स्यात्।
क्रमज्ययोत्था क्रमशिञ्जिनीह
षष्टिच्युता कोटिभवक्रमज्या॥ १७३॥
स्यादुत्क्रमज्या यदि खण्डकानि
भुक्तांशखण्डैक्यवशाद्यथोक्त्या।
क्रमज्यका सा क्रमखण्डकैः स्या-
द्विलोमखण्डैरिह चोत्क्रमज्या॥ १७४॥
शिरोमणौ ज्यकाभोग्यखण्डं स्पष्टं कृतं न यत्।
स्थूले सूक्ष्मत्वविश्वासात्तदर्थं किञ्चिदुच्यते॥ १७५॥
अन्वयव्यतिरेकाभ्यां चेत्स कोटेः क्रमज्यया।
अनुपातः कथं सो न तथा कोट्युत्क्रमज्यया॥ १७६॥
तुल्यन्यायाद्भवेद्येन त्रिज्यार्द्धमतिसूक्ष्मतः।
*कोटिज्यकानुपातेन राशिज्या नैव सिद्ध्यति॥ १७७॥

---

* अत्र विशेषः

अत्रायं तात्कालिकगतिसिद्धान्तमज्ञात्वैव श्रीभास्करप्रकारं खण्डयति। तात्कालिकगत्यानयनार्थं तु द्रष्टव्यं मत्कृतं दीर्घवृत्तलक्षणम्।

सिद्धभोग्ययुतिद्वारा सर्वभोग्ययुतावपि ।
एवं त्रिभज्यका नैव किं च सन्धौ तु खण्डयोः ॥ १७८ ॥
* यातैष्यखण्डयोगार्द्धं यद्भोग्यं कल्प्यते त्वया ।
तदसद्येन सत्तत्र भुक्तमेवास्ति खण्डकम् ॥ १७९ ॥
कोटिज्यकानुपातस्य स्थूलत्वाद्भोग्यखण्डके ।
ज्यासिद्धावल्पबुद्ध्या तु यत् कृतं प्रौढितस्त्वया ॥ १८० ॥
तत्त्याज्यं भोग्यखण्डस्य स्पष्टताकरणं खलु ।
त्यक्त्वा सूक्ष्माणि खण्डानि बलात्सुस्थूलखण्डकैः ॥ १८१ ॥
इष्टं ज्यानयनं तेऽस्ति तदैवं स्पष्टखण्डकम् ।
यातैष्यखण्डभेदघ्नं शेषं खण्डांशकैर्भजेत् ॥ १८२ ॥
तदूनं भुक्तमेवास्ति भोग्यं स्पष्टं भवादृशाम् ।
नास्मादृशामिदं सूक्ष्मज्यकाखण्डकसाधनात् ॥ १८३ ॥
अथोच्यते मया सूक्ष्मस्फुटकर्म सवासनम् ।
पूर्वं यादृक् च सिद्धान्ते गदितं रविणा स्वयम् ॥ १८४ ॥
जिष्णुजार्यभटभास्करमुख्यैरंधपूरुषपरम्परयात्र ।
वासना निजधिया निजतन्त्रे नाश्रितार्करचितानवबोधात्॥१८५॥
तत्तत्खगेन्द्रोचितगोलसंस्थां
ज्ञात्वैव योक्ता स्फुटता मयार्थम् ।
मुन्यर्चिता श्रीरविणाथ सैवो-
च्यते यतोऽन्यैरुदिता न सम्यक् ॥ १८६ ॥
रवेर्मन्दपरिध्यंशा ब्वयोदशकलास्तथा ।

---

* अत्र विशेषः

अत्रायं शेषांशानामासन्नमानेन विलोमज्या कथं सिद्ध्यतीति न जानाति ततो भास्करप्रकारं खण्डयति । आसन्नमानेन विलोमज्यानयनं ततो यातैष्ययोः खण्डकयोर्विशेष इत्यस्योपपत्तिश्च महाप्रश्नटिप्पण्यां वर्णयिष्ये ।

खसागरास्त्रर्तुखंशद्विलिप्ताढ्या १३।४०।३४ स्तथा विधोः ॥१८७॥
परिध्यंशाः कुरामाश्च कलाः सप्तार्णवास्तथा ।
द्विद्वितुल्यविलिप्ताश्च ३१ । ४७ । २२ तथारपरिधेर्लवाः ॥ १८८ ॥
एकलिप्तोनसार्द्धाग्निपर्वता ७३ । २८ बोधनस्य तु ।
इषुलिप्ताढ्यनागाश्विलवा २८ । ५ देवगुरोस्तथा ॥ १८९ ॥
मुनिलिप्ताढ्यदन्तांशा ३२ । ७ भृगुजस्य लवा भवाः ११ ।
शनेः षडश्विलिप्ताढ्यसर्पाब्ध्यंशा ४८ । २६ स्त्र मान्दजाः ॥१९०॥
ओजान्तपरिधेर्भागवर्गघ्नाङ्कांशवर्गतः ।
तत्परिध्यंशवर्गोनैर्भांशवर्गाङ्कवैर्हृतात् ॥ १९१ ॥
पदं सदैकरूपास्ते मान्दाः स्युः परिधेर्लवाः ।
ओजान्तव्यत्ययादित्थं वीजोक्त्या ह्यत्र वासना ॥ १९२ ॥
द्व्यग्निदस्रा २३२ द्व्यग्निभुवो १३२ द्विशैलाः ७२ खर्तुदस्रकाः २६० ।
खाब्धयः ४० परिधेर्भागाः शैघ्र्या भौमात्फलाप्तये ॥ १९३ ॥
ओजान्ते ऽङ्कोदितास्तैते युग्मान्तात् द्व्यधिका गुरौ ।
सैकाः शनौ ज्ञारसितेष्वेकत्रिद्यूनिताः क्रमात् ॥ १९४ ॥
मध्यकक्षाव्यासदलं त्रिज्या यन्मानतः किल ।
तन्मानात्परिधेर्व्यासदलं चान्त्यफलज्यका ॥ १९५ ॥
द्वयं नृपाः पञ्चवेदा २ । १६ । ४५ मान्दान्त्यफलजज्यका ।
रवेस्तथेषवोत्यष्टित्रीषवो ५ । १७ । ५३ हिमदीधितेः ॥ १९६ ॥
साङ्घ्र्यर्कप्रमिता भौमे १२ । १५ विद्व्यंशाः पवना ४ । ४० बुधे ।
गुरौ वाणा द्वियमलाः ५ । २२ षडंशोनद्वयं १ । ५० कवेः ॥ १९७ ॥
शनेरष्टौ शरा ८ । ५ मान्दा क्रमादन्त्यफलज्यका ।
तथैवाष्टाग्नयः ३८ । ४० शून्यसागरा भूभवस्य च ॥ १९८ ॥
तथा द्विद्विमितास्चान्द्रे २२ स्तथार्कप्रमिता गुरौ १२ ।

तथा सर्व्यंशरामाब्धि ४३ । २० । प्रमिता भार्गवे तथा ॥ १९९ ॥
ऋतवः खाब्धयः ६ । ४० सौरे शैघ्रान्त्यफलजज्यका ।
भांश ३६० त्रिज्या ६० प्रमाणेन परिधेरनुपाततः ॥ २०० ॥
यदुच्चेन शुद्धो ग्रहस्तस्य केन्द्रं
भवेत्त्रिन्निभैरेकमेकं पदं स्यात् ।
अयुग्मं तु युग्मं क्रमात्तानि चक्रे
भवन्तीह चत्वारि दोःकोटिसिद्ध्यै ॥ २०१ ॥
अयुग्मे पदे यातमेष्यं तु युग्मे
भुजो बाहुनोनं त्रिभं कोटिरुक्ता ।
ततः स्वस्वकेन्द्रोत्थदोःकोटिजीवे
परिध्यंशनिघ्न्यौ विभक्ते च भांशैः ॥ २०२ ॥
क्रमात्स्वस्वदोःकोटिसञ्ज्ञे फले स्तः
फलान्त्यज्यया वा हते त्रिज्ययाप्ते ।
त्रिभज्योद्भवं दोःफलं यद्यथोक्त्या ।
फलान्त्यज्यकैवेह वेद्या बुधैः सा ॥ २०३ ॥
मृगादिकर्क्यादिगते च केन्द्रे
स्वकोटिजीवान्त्यफलज्ययोस्तु ।
योगोन्तरं कोटिरिहाथ दोर्ज्या
भुजस्तयोर्वर्गयुतेः पदं स्यात् ॥ २०४ ॥
श्रुतिस्तथा कोटिफलत्रिमौर्व्योर्योगोन्तरं चात्र यथोक्तकेन्द्रे ।
कोटिस्तु तद्दोःफलवर्गयोगान्मूलं स एव श्रवणो भवेद्धि ॥ २०५ ॥
केन्द्रस्य दोर्ज्या गुणिता कृतान्त्यफलज्यया कर्णहृताप्तचापम् ।
स्वदमं फलं स्याद्भवृतौ हि मध्यस्फुटान्तरं शून्यशरे ग्रहस्य ॥२०६॥
त्रिज्याहतं दोःफलमेव कर्णोद्धृतं तु तच्चापमितं फलं वा ।

सुसूक्ष्ममित्थं मृदुशीघ्रमार्यैर्निः संशयं कार्यमिदं ग्रहज्ञैः ॥२०७॥
त्रिज्याहतः कर्णहृतः कृतस्तेद्यथोक्त आद्यः परिधिः स्फुटः स्यात् ।
तत्साधितं दोःफलचापमेव फलं भवेद्वोक्तफलेन तुल्यम् ॥ २०८ ॥
त्रिज्याहता कर्णहृतैव दोर्ज्या स्फुटा भवेत्तां परिगृह्य वा स्यात् ।
यथोक्तवद्दोःफलचापमेव फलं यथोक्तेन फलेन तुल्यम् ॥ २०९ ॥
त्रिज्याहता कर्णहृता कृतान्त्यफलज्यकैवात्र भवेत्स्फुटाख्या ।
यत्तद्वशाद्दोः फलचापमेतत्सूक्ष्मं फलं वोक्तफलेन तुल्यम् ॥ २१० ॥
त्रिज्याहता कर्णहृता भुजज्या तच्चापवाङ्कोर्विवरं फलं वा ।
ज्ञेयोऽत्र वाङ्कः प्रतिमण्डलस्य पूर्वोदिताङ्क्रिन्नपदैः स चैवम् ॥ २११ ॥
चापं तु यत्स्वान्त्यफलज्यकायास्त्रिभं युतोनोनयुतं तु तेन ।
पदानि तानीह भवन्ति तेषु वाङ्कस्य यातैष्यमयुग्मयुग्मे ॥ २१२ ॥
षड्भेदजातं सकृदुक्तमित्थं त्वथासकृत्तत्समसूक्ष्ममेवम् ।
कर्णानुपातात्स्फुटतां विहाय सर्वत्र यद्दोःफलचापमत्र ॥ २१३ ॥
तच्चासकृत्साधितमेव सूक्ष्मं
सकृद्यथोक्तेन फलेन तुल्यम् ।
एवं यथात्रैव सकृत्प्रकारा-
दपि स्वमान्दं किल दोःफलं स्यात् ॥ २१४ ॥
सकृद्यथोक्तश्रवणोद्भवस्यासन्नं तथाहं प्रवदामि सम्यक् ।
गूढस्फुटत्वानवबोधजातमूढभ्रमज्ञानविभञ्जनार्थम् ॥ २१५ ॥
परं सदैकरूपैस्तु परिध्यंशैः पुरोदितैः ।
सप्तभेदोद्भवं साध्यं फलं नेदं कथं च न ॥ २१६ ॥
त्रिज्यागुणान् कर्णहृतान् कृत्वा पूर्वोक्तवत् स्फुटान् ।
युग्मौजान्तपरिध्यंशान्ततोऽनुपतनात्स्फुटैः ॥ २१७ ॥
स्वेष्टमध्यपरिध्यंशैः फलं कार्य्यं विचक्षणैः ।

युग्मौजान्तपरिध्यंशान्मान्दान् स्पष्टान्वदामि तान् ॥ २१८॥
विल्यंशा मनवः १३।४० सूर्ये दन्तास्त्र्यंशोनिता ३१।४० विधौ।
ओजान्तोत्थपरिध्यंशाः प्रोक्ता भौमादथोच्यते ॥ २१९ ॥
ओजे द्व्यगा ७२ वसुयमा २८ रदा ३२ रुद्रा ११ गजाब्धयः ४८।
द्वितीययुग्मपादान्ते सपञ्चांशेन्द्रभागकाः १४। १२ ॥ २२० ॥
रवेरङ्कलोनेषुवन्ह्यंशा ३४। ५१ हिमदीधितेः।
सल्यंशा युग्मनन्दांशाः २६। २० कुसुते कलयैकया ॥ २२१ ॥
ऊनाः सार्द्धखरामा ३०। १६ ज्ञ बुधे साब्धिशराग्नयः ३५। १५।
भागा गुरौ च सत्र्यंशा भवांशा ११। २० भृगुनन्दने ॥ २२२ ॥
त्रिलिप्तोना रसेष्वंशाः ५५। ५७ शनौ तुर्यपदान्तजे।
युग्माङ्कयेथ सूर्यस्य सषष्ठांशास्त्रयोदश १३। १०॥ २२३ ॥
विधोर्नन्दद्विभागास्त्र सपञ्चांशाः २६। १२ कुजस्य तु।
सैकलिप्तैकषष्टिस्तु ६१। १ बुधे वह्निकलान्विताः ॥ २२४ ॥
रसद्व्यंशा २६। ३ गुरौ भागा लिप्ताश्चाङ्कद्विसंमिताः २६। २६।
कवेर्विल्यंशरुद्रांशाः १०।४० विल्यंशव्यब्धि ४२।४० भागकाः ॥२२५॥

क्रमादोजयुग्मपरिधिदर्शनम्।

| सू. | चं. | मं. | बु. | वृ. | शु. | श. | मान्दाःपरिधयः |
|---|---|---|---|---|---|---|---|
| १३<br>४० | ३१<br>४० | ७२ | २८ | ३२ | ११ | ४८ | ओजपदान्ते |
| १४<br>१२ | ३४<br>५१ | ६२<br>२० | ३०<br>२६ | ३५<br>१५ | ११<br>२० | ५५<br>५७ | द्वितीययुग्मान्ते |
| १३<br>१० | २६<br>१२ | ६१<br>१ | २६<br>३ | २६<br>२६ | १०<br>४० | ४२<br>६१ | चतुर्थयुग्मान्ते |
| १३<br>४१ | ३२<br>१ | ७६<br>४० | २८<br>१६ | ३२<br>२२ | ११<br>० | ४६<br>१६ | सौरशास्त्रे युग्मान्ते |

अतः श्रीरविणा स्वरूपान्तराणामाघवतस्य ते ।
द्वितीयतुर्ययोगार्द्धे गृहीताः परिधेर्लवाः ॥ २२६ ॥
नाशङ्कनीयं न चले किमित्थं फलवासना ।
विचित्रास्ति यतस्तत्र गोलस्थितिविभेदतः ॥ २२७ ॥
यच्चासन्नं युग्मपदं तद्ग्राह्यं विबुधैरिह ।
अयुग्मं त्वेकमेवोक्तं परिधिज्ञानहेतवे ॥ २२८ ॥
ओजयुग्मान्तरगुणा भुजज्या त्रिज्ययोद्धृता ।
युग्मवृत्ते धनर्णं स्यादोजादूनाधिके स्फुटः ॥ २२९ ॥
कर्णानुपातजस्पष्टाः परिध्यंशाः पुरा कृताः ।
यथा सूक्ष्मफलार्थं वै तद्वदत्रापि चादृताः ॥ २३० ॥
सर्वैः प्रकारैः फलमेकमेव पूर्वोक्तभंग्यैव यथा सुदृढमम् ।
सिद्धं भवेत्तन्मयका निबद्धं ज्योतिर्विदां संशयभञ्जनार्थम् ॥२३१॥
युग्मान्तजादोजपदान्तजातैर्मध्येनुपातात् परिधेः स्फुटत्वम् ।
फलोपपत्त्या विहितं सदस्ति जानन्ति नेत्थं जडबुद्धयस्तु ॥२३२॥
इत्थं मयोक्तं परिधेः स्फुटत्वं तदेव यच्छ्रीरविणा यथार्थम् ।
प्रोक्तं स्वशास्त्रेथ परं तु तत्र सन्दृश्यते युग्मपदान्तपाठः ॥२३३॥
उक्तादिसंवादतया स चायं प्रायो बुधैरज्ञपरम्परास्थैः ।
प्राङ्नाशितः संप्रति सप्रमाणं विज्ञैः स्वभक्त्या नितरां गृहीतः॥२३४॥
आर्योदितां च ग्रहगोलसंस्थां ज्ञात्वैव रव्याशयपाठ उक्तः ।
स्थित्यन्यथात्वेनुगतः प्रसिद्धः स एव युक्तो मम नाग्रहोऽत्र ॥२३५॥
यद्वाक्फलेत्र श्रवणानुपाते कृतेपि सौरे परिधेः स्फुटत्वम् ।
तद्वासनाविद्भगवान् स एव नारायणो मण्डलगो न चान्यः ॥२३६॥
वस्तुतस्तु नहि सौरमतस्य कल्पनां ग्रहभवामवगन्तुम् ।
अन्यथा स्थितिवशाद्दृषिवर्योपि क्षमोत्र जडबुद्धिनरः कः ॥२३७॥

अतीन्द्रियार्थविज्ञानं प्रमाणं श्रुतिरेव हि ।
श्रुतिर्यत्र प्रमाणं स्याद्युक्तिः का तत्र नारद ॥ २३८ ॥
जिज्ञासोर्युक्तिरिष्टास्ति यदि श्रुत्यनुसारिणी ।
इत्थं शाकल्य एवाह ब्रह्मोक्तस्वनिबन्धने ॥ २३९ ॥
इत्थं कृतैस्तैः परिधिस्फुटांशै-
र्यथोक्तवद्दोःफलचापमेव ।
फलं च कर्णाङ्कववत्सकृत्स्या-
ज्ज्योतिर्विदां संव्यवहारयोग्यम् ॥ २४० ॥
आर्षोक्तगूढस्फुटतामबुध्वा मान्ददोः फलम् ।
सकृदेवोदितं स्वोक्तौ भास्कराद्यैर्न सच्च तत् ॥ २४१ ॥
तुलादिमेषादिगते च केन्द्रे
फलं धनर्णं क्रमशश्च वेद्यम् ।
सुसंस्कृतो मन्दफलेन मध्यो-
मन्दस्फुटः स्यादथ वा स्फुटाख्या ॥ २४२ ॥
कर्णानुपातप्रभवा स्वमान्दकेन्द्रस्य दोर्ज्या विहितास्ति पूर्वम् ।
तच्चापमुच्चेन युतं हि मन्दस्फुटोथ वेत्थं रविचन्द्रयोर्हि ॥२४३॥
परं तु तच्चापमिहाद्यपादे चापं तथा ह्यादिपदक्रमेण ।
विहीनितं चक्रदलात्तदेव चक्रार्द्धयुक्तं वियुतं तु चक्रात् ॥ २४४ ॥
मृदुस्फुटावेव सदार्कचन्द्रा-
वेवं स्फुटौ स्तश्च तयोरभावात् ।
शीघ्रोच्चकस्याथ कुजादिकानां
स्फुटक्रियां वच्मि मृदुद्रुताभ्याम् ॥ २४५ ॥
स्वमन्दफलसंस्कारान्मध्यमः स्यान्मृदुस्फुटः ।
स्वशीघ्रफलसंस्कारात् स्यात् सकृत् स स्फुटग्रहः ॥ २४६ ॥

मध्ये शीघ्रफलस्यार्द्धं मान्दमर्द्धफलं तथा ।
मध्यग्रहे मान्दफलं सकलं शीघ्रमेव च ॥ २४७ ॥
इत्थं सौरक्रमप्रामाण्यतः स्पष्टक्रियोदिता ।
तत्फलद्वयमेवाहुः पूर्णमार्षविरोधिनः ॥ २४८ ॥
अत्रापि चेन्मान्दवदन्त्यशीघ्रकेन्द्रस्य दोर्ज्या क्रियते स्फुटाऽस्याः ।
चापं तु यत्स्वीयपदोद्भवं तच्चलोच्चयुक्तं स्फुटखेचरो वा ॥ २४९ ॥
असकृत्साधितं मान्दं फलमेवं स्फुटार्कतः ।
स्पष्टद्युर्यै विलोमेन संस्कृतं मध्यमो भवेत् ॥ २५० ॥
इत्थं सौरोचितं प्रोक्तं सकृद्दोःफलमेव चेत् ।
स्वीयं केवलमर्कोत्र स्फुटं वामं स मध्यमः ॥ २५१ ॥
अथोपपत्तिं शृणु मध्यमस्वकक्षास्थितव्यासदले त्रिभज्या ।
अङ्क्या तदङ्कैर्न्दुशीघ्रवृत्तव्यासार्द्धकं स्वान्त्यफलज्यकेह ॥२५२॥
यथा भगोलेस्ति कदम्बमध्याद्भमण्डलं स्वाङ्कलवैः कुकेन्द्रम् ।
स्वाकाशगोलेपि तथैव कक्षाः खे गामिनां तत्समवृत्ततः स्युः ॥२५३॥
परं तु यत्प्राग्भ्रमणात् खगस्य केन्द्रस्य भुक्त्या भ्रमतीह विम्बम् ।
तद्वृत्तकेन्द्रं क्षितिगर्भगं नो किन्त्वन्तरे तोन्त्यफलज्यकाग्रे ॥२५४॥
भूकेन्द्रमाद्यं च ततो द्वितीयं केन्द्रं भवेत्स्वान्त्यफलज्यकाग्रे ।
ताभ्यां विधेये त्रिभजीवयैव मध्यस्वकक्षाप्रतिमण्डलाख्ये ॥२५५॥
क्रमादथाद्यादृजु तद्द्वितीयस्पृक्सूत्रमूर्ध्वं कृतमुच्चसञ्ज्ञम् ।
तथैव यच्चाधरदेशयातं नीचाभिधं सूत्रमिलासुकेन्द्रात् ॥२५६॥
यत्रोच्चसूत्रं प्रतिमण्डलेस्ति तत्र ग्रहोच्चं परिकल्पनीयम ।
तथैव नीचं किल नीचसूत्रं स्वकक्षिकायामपि तद्वदेव ॥ २५७ ॥
उक्तं हि संज्ञादिनयं कुगर्भाद्दूरस्थितत्वान्निकटस्थितत्वात् ।
तद्वृत्तयोः केन्द्रगतेय तिर्यग्गते च सूत्रे सुधिया विधेये ॥ २५८ ॥

तयोर्यदूर्ध्वाधरमन्तरालं सर्वत्र तत्स्यान्त्यफलज्यकाख्यम् ।
नीचोच्चसूत्राच्च समान्तरेण तद्वृत्तयोरन्तरगं च वृत्तम् ॥ २५९ ॥

ऊर्ध्वाधरस्यान्त्यफलज्यकाख्यं
सर्वत्र तच्चापि विदावबोध्यम् ।
ग्रहस्य बिम्बं प्रतिमण्डलेस्ति
तन्मण्डलं च भ्रमतीन्द्रकाष्टाम् ॥ २६० ॥

केन्द्रस्य भुक्त्यैकदिनेथ तेन
बिम्बभ्रमः स्वप्रतिमण्डलात् स्यात् ।
यत्रेष्टकाले भ्रमणाच्च बिम्बं
भवेच्च तत्स्पृक्क्षितिगर्भतः स्यात् ॥ २६१ ॥

वृत्तं भचक्रं किल यत्र तत्र मेषादितः स्पष्टखगः फलार्थम् ।
प्रकल्पितः पूर्वमतीन्द्रियज्ञैस्तत्साधनार्थं च वदामि युक्तिम् ॥ २६२ ॥

उच्चादिलोमं खलु तुङ्गभागै-
र्मेषादिरस्मात् खचरोनुलोमम् ।
ज्ञेयस्तदुच्चान्तरमत्र केन्द्रं
तज्ज्या भुजज्या खचरावधि स्यात् ॥ २६३ ॥

तिर्यक् स्वनीचोच्चकवृत्तस्य
बाहुस्तथा कोटिरिहाथ वेद्या ।
ऊर्ध्वाधरा मध्यमकक्षिकास्थ-
तिर्यक्स्थसूत्रात्खचरावधिस्था ॥ २६४ ॥

सा कोटिजीवान्त्यफलज्ययोः स्या-
द्योगान्तराभ्यां मृगकर्किकेन्द्रे ।
तद्बाहुकोट्योः कृतियोगमूलं
कर्णः कुगर्भात्खचरावधि स्यात् ॥ २६५ ॥

अथात्र तन्मध्यमकक्षिकायां तत्कोटिसूत्रं किल यत्र तत्र ।
मध्यो ग्रहो यत्र च कर्णसूत्रं तत्र स्फुटस्तत्र फलं तदन्तः ॥२६६॥
तत्साधनं च ग्रहबिम्बकेन्द्रादधोमुखे ते श्रुतिकोटिसूत्रे ।
कुगर्भतिर्यग्गतसूत्रगा स्यात् केन्द्रस्य दोर्ज्यैव भुजस्तदन्तः ॥२६७॥
बिम्बात्तथैवान्त्यफलज्यकाख्यश्रुतावपि स्वीयफलाय जात्यम् ।
तत्कर्णसूत्रे च भुजज्यका दोस्तथा स्वबिम्बाल्लघुकर्णसूत्रे ॥२६८॥
अधोमुखे मध्यमखेटबिम्बान्तरस्वरूपान्त्यफलज्यकाख्ये ।
का स्यात्फलज्येत्यनुपाततः स्यादाद्यप्रकारोयमिहोपपन्नः ॥२६९॥
मध्यग्रहं मध्यमकक्षिकास्थं केन्द्रं प्रकल्प्यान्त्यफलज्यया वा ।
नीचोच्चवृत्तं कुरु मध्यमस्पृक् कुगर्भतस्तद्धृतिगं च सूत्रम् ॥२७०॥
ऊर्ध्वाधरं तद्धृतिगोर्ध्वपाली
लग्नं च तद्यत्र भवेत्तदुच्चम् ।
नीचं तथाधस्स्थितपालिलग्नं
तिर्यक्स्थसूत्रं च तयोश्च मध्ये ॥ २७१ ॥
नीचोच्चवृत्तप्रतिवृत्तयोगे
बिम्बं वरीवर्ति सदैव यस्मात् ।
नीचोच्चमध्ये परिधौ तु भांशा-
ङ्किते स्वबिम्बावधि तुङ्गदेशात् ॥ २७२ ॥
केन्द्रांशकाः स्वप्रतिवृत्तजाता एवाथ तज्जे भुजकोटिजीवे ।
नीचोच्चसंज्ञात्परिधिप्रमाणात्त एव दोःकोटिफलाह्वये स्तः ॥२७३॥
क्रमात्तदूर्ध्वाधरसूत्रतस्तु तिर्यक्स्थसूत्राच्च तथा कुमध्ये ।
तिर्यक्स्थसूत्रं भवतीह तस्मान्नीचोच्चतिर्यग्गतसूत्रकं हि ॥२७४॥
समान्तरस्थं त्रिभजीवया स्या-
दतोत्र केन्द्रे मृगकर्किसञ्ज्ञे ।

त्रिज्या तदूर्ध्वाधरसंस्थितत्वा-

त्त्रिभज्यका कोटिफलाङ्कयोश्च ॥ २७५ ॥

योगान्तराभ्यां भवतीह कोटिः कुमध्यतिर्यक्स्थितसूत्रतश्च ।

बाहुस्तथा दोःफलमेव ताभ्यां कर्णः स एवास्ति कुबिम्बमध्ये ॥२७६॥

मध्याख्यकक्षागतमध्यखेटा-

द्यावत्कुकेन्द्रं श्रवणस्त्रिभज्या ।

कोटिस्तथा कोटिगुणो भुजज्या

बाहुस्त्विदं जात्यमधोमुखं स्यात् ॥ २७७ ॥

तथोर्ध्वगं स्वान्त्यफलज्ययैव

कर्णः स्वबिम्बावधि मध्यखेटात् ।

कोटिस्तथा कोटिफलं च बाहु-

स्तद्दोःफलं चेति सजातिजात्यम् ॥ २७८ ॥

त्रिज्याकर्णे दोर्भुजज्या तदा का

स्वान्त्यज्याख्योर्ध्वश्रुतौ दोःफलं स्यात् ।

यद्वा मध्याह्नांशवृत्ते तु दोर्ज्या

का स्यान्नीचोच्चाभिधे लब्धतुल्यम् ॥ २७९ ॥

यावत्स्वबिम्बश्रवणो द्वितीयप्रकारजैव क्षितिगर्भतः स्यात् ।

कोटिस्तयोर्दोःफलमेव मध्ये बाहुस्तथा स्वीयफलार्थमन्यत्॥२८०॥

तत्कर्णकोट्युद्भवसूत्रयोः स्यान्मध्ये फलं मध्यमकक्षिकायाम् ।

तत्तु त्रिभज्याश्रवणे कुमध्यादतः फलं स्याच्छ्रवणानुपातात् ॥२८१॥

चेद्दोःफलं स्वश्रवणे भुजोऽस्ति तदा त्रिभज्याश्रवणे कथं स्यात् ।

जाता फलज्याथ च तत्स्वरूपद्वयं त्विदं दोःफलभेदजातम् ॥२८२॥

दो. अ. त्रि. दो. प. त्रि.
त्रिक. क ३६०

त्रिज्याकर्णौ गुणहरौ त्यक्त्वा यच्छेषकं त्विह ।

अस्ति तद्दोःफलं तेन त्रिज्याघ्नं कर्णहच्च तत् ॥ २८३ ॥

कर्णानुपातात्फलिताज्जातं दोःफलमेव हि ।
फलज्या स्यात्परिध्यन्त्यफलज्याभ्यां प्रकारतः ॥ २८४ ॥
ज्ञातद्विधादोःफलतः फलज्यां द्विधोपपन्नां कथयन्ति सन्तः ।
एवं यथोक्तात्परिधेस्तथान्त्यफलज्यकायास्त्रिगुणो गुणोस्ति॥२८५॥
कर्णो हरस्तत्फलितानुपातात्
स्फुटीकृताभ्यां च सदैव ताभ्याम् ।
संसाधितं दोःफलमेव सूक्ष्मा
प्रत्यक्षतः सैव फलज्यका स्यात् ॥ २८६ ॥
कर्णानुपातात्परिधेः स्फुटत्वं
विनैव तज्जे मृदुदोःफलाख्ये ।
कर्णानुपातो न कृतः स्वयोग्यो-
प्यल्पान्तराङ्गीकरणात् सुखार्थम् ॥ २८७ ॥
इतीरितं तन्नहि युक्तियुक्तं
सदुक्तयुक्त्या परिबाधितत्वात् ।
अहो कथं ते रचयन्ति शास्त्रं
स्वार्षाश्रयाबोधवशात्तदुक्त्या ॥ २८८ ॥
कर्णानुपातात्परिधेः स्फुटत्वं त्यक्त्वा परे व्यत्ययतोनुपातात् ।
तत्स्पष्टताङ्गीकरणादबोधान्मिथ्याद्यतुल्यं फलमामनन्ति ॥२८९॥
श्रीब्रह्मगुप्तप्रमुखा न तत्सत्सङ्गोत्तयुक्त्या गणितज्ञ यस्मात् ।
कर्णाग्रसिद्धे मृदुवृत्तकेन्द्रे कर्णाग्रगं बिम्बमिदं कथं स्यात् ॥२९०॥
केचित्तु दोर्ज्यान्त्यफलज्यकाख्य-
कर्णास्तथोक्तास्त्रिगुणाग्रगास्ते ।
कृत्वाथ मन्दश्रवणाग्रगान् तान्
यद्दोःफलं सुत्यनुपातजं तत् ॥ २९१ ॥

आद्योदितं दोःफलमेव नाशे कृते समत्वाद्गुणहारयोः स्यात् ।
इत्थं हि धृष्टाः प्रवदन्ति तुच्छं मतं तदीयं प्रतिभाति यस्मात्॥२९२॥

कर्णाग्रदोर्ज्यान्त्यफलज्यकाख्य-
हतौ तु हारस्त्रिगुणो गृहीतः ।
नो मन्दकर्णो मृदुदोःफलार्थ-
मित्युक्तयुक्त्यैव हि तन्निरासः ॥ २९३ ॥

कर्णानुपातादिह दोर्ज्यकाया अपि स्फुटत्वं परिकल्प्य चैवम् ।
यद्दोःफलं तत्समसूक्ष्मरूपफलज्यकायामिह मे क्षतिर्न ॥ २९४ ॥

फलज्या मध्यखेटोत्था ह्रस्वकर्णानुपातजा ।
स्पष्टकेन्द्रोद्भवेनैव दोःफलेन समा सदा ॥ २९५ ॥

इत्थं भङ्ग्या क्षेत्ररीत्या यथा निःसंशयं तथा ।
वदाम्यहं नृणां तुष्ट्यै संशयग्रस्तदेहिनाम् ॥ २९६ ॥

कल्प्यं कुकेन्द्रविम्बान्तः श्रवणो मध्यवृत्तकम् ।
मध्यकक्षास्थितान्मध्यग्रहचिह्नाद्यथा भवेत् ॥ २९७ ॥

कोटिवृत्तं तथा तत्स्थस्पष्टचिह्नादपोह तत् ।
कोटिसूत्रं तयोस्तिर्यक् समानं चान्तरं सदा ॥ २९८ ॥

मध्योत्थकोटिसूत्रस्थं विम्बं स्यात्प्रतिवृत्तगम् ।
उच्चाद्विम्बावधि स्वीयं मध्यमं केन्द्रमस्ति च ॥ २९९ ॥

स्पष्टोत्थकोटिसूत्रस्थं प्रतिमण्डलदेशगम् ।
उच्चात् स्पष्टं भवेत्केन्द्रं तत्र मध्याख्यसूत्रतः ॥ ३०० ॥

तत्कोटिद्वयसम्बन्धात् कोणौ यौ विषमौ च तौ ।
एकरूपौ तयोर्जात्ये तुल्ये तुल्यश्रुतेर्वशात् ॥ ३०१ ॥

इत्थं शिल्पज्ञ बुद्ध्वेमां वासनां शृणु तत्त्वतः ।
विम्बादन्त्यफलज्याग्रतुल्यकर्णे तु दोर्ज्यका ॥ ३०२ ॥

मध्यखेटजचिह्नाद्या कृता मध्याख्यसूत्रगा ।
भुजः स्वीयफलज्या स्यान्मध्यकक्षावृतौ तया ॥ ३०३ ॥
तद्वृत्तगस्पष्टचिह्नान्मध्यत्वेनाहृतादपि ।
उक्तवद्दोःफलं कल्प्यं भिन्नं नीचोच्चवृत्ततः ॥ ३०४ ॥
प्रतिवृत्तस्थतत्स्पष्टकोटिसूत्रावधिस्थिते ।
कर्णे स्यान्त्यफलज्याग्रे वाङ्कः स्यान्मध्यसूत्रतः ॥ ३०५ ॥
दोःफल स्पष्टकेन्द्रोत्थं तुल्यं पूर्वफलज्यया ।
समत्वाज्जात्ययोरित्थं चोपपन्नमसंशयम् ॥ ३०६ ॥

ज्ञाताच्च कर्णादनुपातजातं
स्फुटत्वमेकं फलसंस्कृताद्वा ।
ज्ञातग्रहात्केन्द्रजदोर्ज्यकायाः
स्फुटत्वमन्यद्द्विविधं तदित्थम् ॥ ३०७ ॥

अज्ञातकर्णे फलसंस्कृतोत्थस्फुटस्वकेन्द्रोद्भवदोःफलं स्यात् ।
सकृत्फलज्यैव परं त्वसाध्या पूर्वं तदज्ञानवशाच्च सात्र ॥ ३०८॥
अतोऽत्र मध्यग्रहमेव पूर्वं प्रकल्प्य खेटं फलसंस्कृतं तम् ।
तदुद्भवस्फुटकेन्द्रदोर्ज्याद्वारोद्भवं दोःफलचापमस्मात् ॥ ३०९॥
सुसंस्कृतात् खेचरतो यथोक्त्या मुहुः कृतं दोःफलचापमेव ।
यथोक्तवत्सूक्ष्मफलं समन्तात्सकृत्कृतेन श्रवणोद्भवेन ॥ ३१० ॥

एवं तु युग्मौजपदस्फुटत्व-
द्वारा स्फुटत्वं परिधेस्तु कृत्वा ।
तत्साधितं दोःफलमुक्तरीत्या
फलज्यका स्यात् सकृदेव चात्र ॥ ३११ ॥

यदा कर्णव्यासखण्डेन वृत्तं
कक्षावृत्तं खेटजं भूमिगर्भात् ।

पूर्वं यत्स्यान्मध्यखेटस्य चिह्नं
तत्स्पृक् चोर्ध्वं भूमिकेन्द्राच्च सूत्रम् ॥ ३१२ ॥
कक्षावृत्ते यत्र लग्नं च तत्र
मध्यः खेटः कर्णसूत्रे स्फुटः स्यात् ।
बिम्बस्थाने तद्गतौ चक्रलिप्ता
भांशास्तात्र व्यासखण्डं त्रिभज्या ॥ ३१३ ॥
अत्रापि तुङ्गात् किल तुङ्गभागै-
र्मेषादिरस्मात्खचरः स्फुटः स्यात् ।
बिम्बावधिस्थः स्फुटमध्यमान्तः
फलं तु तज्ज्योद्भवसूत्रकं यत् ॥ ३१४ ॥
तद्दोःफलाख्यं श्रवणप्रमाणात् सिद्धं न तच्च त्रिगुणप्रमाणात् ।
कर्णानुपातत्रिगुणोत्थवृत्ते या ज्याथ तच्चापमितं फलं स्यात्॥३१५॥
एवं च तन्मध्यमकक्षिकाख्यद्वारा खकक्षावृतिजं यदत्र ।
तत्क्रान्तिवृत्तोद्भवमेव वेद्यं शून्ये शरे गोलविदा सुसूक्ष्मम्॥३१६॥
मध्यादग्रे स्फुटे तत्स्याद्धनं पृष्ठे ऋणं त्वतः ।
प्रत्यक्प्राक्तद्भषट्कस्थे तुङ्गाद्बिम्बे भवेत्क्रमात् ॥ ३१७ ॥
मान्दं फलं केवलमस्ति यस्य तद्वासना प्रोक्तविदा सदोच्चा ।
फलद्वयं यस्य मतेथ शैघ्र्यवृत्तस्य केन्द्रं किल तन्मते तु॥ ३१८॥
सदैव मान्दप्रतिमण्डलस्थं तद्वृत्तपालौ खगबिम्बकेन्द्रम् ।
शैघ्र्याभिधेपि प्रतिमण्डलेस्ति तत्र स्फुटस्यानयनं किलैवम्॥३१९॥
सुसंस्कृतो मन्दफलेन मध्यो-
मन्दस्फुटः स्यात्प्रफलेन सोपि ।
सुसंस्कृतः स्पष्टखगः सकृत्स्या-
दित्थं खलो गोलविदो वदन्ति ॥ ३२० ॥

फलाद्धाभ्यां फलाभ्यां च संस्कारात् स्फुटता भवेत् ।
तद्वासना गोलभेदैरार्षतत्त्वविदां स्फुटा ॥ ३२१ ॥

वेद एव रवितन्त्रमथास्य वासनाकथनमल्पधियां हि ।
दोष एव न गुणो रविणोक्तं तेन युक्तियुतमेव सदोह्यम् ॥३२२॥

रेखास्वरूपाण्युदितानि यानि
वृत्तानि यद्गोलभवानि तांश्च ।
वदामि गोलान् फलसेतुभूता-
न्मूर्त्तान्दृढाऽऽकाशभवान् विरूपान् ॥ ३२३ ॥

उच्चनीचाभिधौ कर्णौ बिम्बार्द्धेन युतोनितौ ।
परोच्चपरनीचाख्यौ ज्ञेयौ गोलविदात्र तौ ॥ ३२४ ॥

परोच्चमान्दश्रवणान्तरेण कुगर्भतः स्यात्परमोच्चगोलः ।
तथैव मान्दात्परनीचकर्णाद्व्यासार्द्धतः स्यात् परनीचगोलः ॥३२५॥

परनीचाख्यगोलाधः परोच्चाद्गोलतो बहिः ।
नैवार्कबिम्बसञ्चारस्तयोर्मध्ये तु सोस्ति हि ॥ ३२६ ॥

परोच्चकर्णो रविमान्दजान्त्यफलज्ययोनः खलु पृष्ठकर्णः ।
स चार्कबिम्बीयसुगोलकस्य व्यासोनितस्तोदरसञ्ज्ञकर्णः ॥३२७॥

तत्कर्णविस्तारदलेन सिद्धौ पृष्ठोदराख्यौ किल यस्य गोलौ ।
स च प्रसिद्धः प्रतिमण्डलाख्यो गोलोथ पृष्ठोदरगोलमध्ये ॥३२८॥

स्यात्तस्य पिण्डो रविबिम्बगोलव्यासोन्मितोस्त्यत्र च बिम्बगोलः ।
स्थिरो रवेस्तत्प्रतिवृत्तपृष्ठगोले तु ये स्तः खलु पृष्ठकेन्द्रे ॥३२९॥

मिथश्च षड्भान्तरिते ततो यत्खाङ्कैस्तु वृत्तं प्रतिमण्डलं स्यात् ।
पृष्ठे तथैवोदरगोलके तन्मध्ये तु यत्तत्प्रतिमण्डलाख्यम् ॥३३०॥

वदन्ति मुख्यं रविकेन्द्रयोगान्मध्याख्यकक्षाप्रमितं बुधेन्द्राः ।
नीचोच्चगव्यासभवं हि रेखात्मकं तु यद्व्यासदलं त्रिभज्या ॥३३१॥

खोर्ध्वस्थिताकाशकदम्बकाभ्यामप्यर्कमान्दान्त्यफलांशकैस्तु ।
सुगन्धदेशौ भवतः प्रसिद्धौ ययोर्निबद्धं सरलं च सूत्रम् ॥ ३३२ ॥
यथा कदम्बद्वयबद्धसूत्रात्सर्वत्र मान्दान्त्यफलज्यया स्यात् ।
समान्तरस्थं त्वथ पृष्ठकेन्द्रे सुगन्धदेशद्वयगे तथायम् ॥ ३३३ ॥
गोलस्त्वलोस्ति प्रतिमण्डलस्य तद्व्यासखण्डे प्रतिवृत्तकेन्द्रम् ।
कुगर्भतस्त्वान्त्यफलज्यकाग्रे सदा सुगन्धद्वयबद्धसूत्रे ॥ ३३४ ॥
कदम्बकस्थैर्यवशाद्भगोल-
स्त्वलांशगत्या चलतीह तद्वत् ।
परोच्चगोलोपि चलत्यजस्र-
मैन्द्र्यां स्वशक्त्यैव [निजोच्चभुक्त्या] ॥ ३३५ ॥
सुगन्धजस्थैर्यवशात्तथायमैन्द्र्यां त्वलोस्ति प्रतिवृत्तगोलः ।
इनोत्थया मध्यमकेन्द्रभुक्त्या तद्गोलमध्यार्कजबिम्बगोलः ॥ ३३६ ॥
चलत्यजस्रं प्रतिवृत्तगोलभ्रमात्तथैवात्र तयैव गत्या ।
एवं हि यत्र भ्रमणाच्च बिम्बं कुगर्भदृक्सूत्रवशाद्भचक्रे ॥ ३३७ ॥
स्फुटग्रहो मेषमुखात्स तत्र स्वार्थैः फलार्थं परिकल्पितो हि ।
मूर्त्तौ परोच्चप्रतिवृत्तगोलौ कक्षाभिधः कल्पित एव गोलः ॥ ३३८ ॥
यथो भवेद्यः प्रतिवृत्तदेशो दूरे भुवस्तस्य कृतोच्चसंज्ञा ।
नीचं तथासन्नतरस्तदुच्चाद्भात्तं तदंशैरजवक्रमत्र ॥ ३३९ ॥
परोच्चगोलमध्यस्थः प्रतिवृत्तस्य गोलकः ।
तथा तद्गोलमध्येपि रविबिम्बस्य गोलकः ॥ ३४० ॥
अथान्यथा वा कथयामि सम्यक् तस्य स्फुटस्यैव सुयुक्तिमत्र ।
परोच्चगोलं परनीचगोलादूर्ध्वं परोच्चाम्बरगोलपिण्डः ॥ ३४१ ॥
बिम्बस्य संचारवशात्स एव
कक्षाख्यगोलोस्ति सहसरश्मेः ।

व्यासस्य तत्पिण्डसमोस्ति यस्य
नीचोच्चवृत्तस्य परस्य गोलः ॥ ३४२ ॥
तद्गोलकेन्द्रं क्षितिगर्भतस्य
मध्यस्थकक्षाश्रवणान्तरे स्यात् ।
तत्पृष्ठकेन्द्रे तु कदम्बकाभ्यां
स्वोर्ध्वस्थिताकाशगतैकपार्श्वे ॥ ३४३ ॥
मध्याख्यकर्णान्तरितस्वगन्धप्रदेशसक्तो भवतस्तथायम् ।
नीचोच्चगोलोस्ति हि गन्धयुग्मसूत्रं कदम्बद्वयसूत्रतस्य ॥३४४॥
सर्वत्र मध्यश्रवणान्तरेण समान्तरस्थं किल तत्र सिद्धम् ।
यथा कदम्बद्वयतो भगोलः परोच्चगोलोपि चलस्तथैव ॥३४५॥
गन्धद्वयस्थैर्यवशाच्च गोलो-
नीचोच्चसंज्ञः परदिक्चलः स्यात् ।
तस्याश्रयस्याश्रय उच्चगत्या
प्राच्यां चलोतस्त्वलमुच्चमुक्तम् ॥ ३४६ ॥
नीचोच्चसंज्ञोस्ति यदन्तरस्थः
स स्वाश्रयान्तश्चलतीह चैन्द्याम् ।
कदम्बकाभ्यां निजकेन्द्रगत्या
स्वान्तर्गतं तं परिधिं गृहीत्वा ॥ ३४७ ॥
स्वयं तु नीचोच्चकवृत्तगोलः
केन्द्रस्य गत्यैव हि पश्चिमायाम् ।
चलोस्ति गन्धादिह तं गृहीत्वा
स्वान्तर्गतं खेचरविम्बगोलम् ॥ ३४८ ॥
गन्धात्परिध्यङ्घ्रिलवान्तरेस्य
पृष्ठे रवेरस्ति हि विम्बगोलः ।

## प्रतिमण्डलाद्रव्याकाशगोलस्वरूपम् ।




## नीचोच्चवृत्तपरिधेर्वा रव्याकाशगोलस्वरूपम् ।



स्थिरस्तदाकाशनिमग्न एव
नीचोच्चगोलभ्रमणाद्भ्रमोऽस्य ॥ ३४९ ॥
तद्गोलवृत्तार्द्धदलेन गन्धादिम्बाश्रयाद्यद्भवतीह वृत्तम् ।
नीचोच्चवृत्तं परिधिं वदन्ति नीचोच्चदेशाविह पूर्ववत्स्तः ॥ ३५० ॥
नीचोच्चवृत्तात्परिकल्पनेयं
कृत्वा समत्वात्प्रतिवृत्तभङ्ग्या ।
इत्थं प्रदृष्टौ भवतो हि यत्र
कुगर्भदृक्सूत्रवशात् स्फुटः सः ॥ ३५१ ॥
अत्रार्कवच्चन्द्रफलोपपत्तिर्ज्ञेयाथ तद्वच्च कुजादिकानाम् ।
मृदुद्रुताद्यादिफलप्रसिद्धौ तदर्द्धगोलाद्यमपीह बोध्यम् ॥ ३५२ ॥
भ्रमन्नथो मध्यमकक्षिकायां
मध्यो ग्रहः संजनयत्यभीष्टम् ।
मृदुस्फुटाख्यं रविरत्र विम्ब-
योगात्स्फुटः स्यान्मृदुकर्णवृत्ते ॥ ३५३ ॥
नैवं कुजादिः स मृदुस्फुटोऽत्र तच्छीघ्रवृत्तस्य च केन्द्रमस्ति ।
विम्बं तु तद्वृत्तगतं तदत्र मन्दस्फुटान्मध्यमतः सुबोधम् ॥ ३५४ ॥
यद्वच्च मान्दात्परिधेस्तु केन्द्रा-
न्मध्यग्रहात्तत्परिधिस्थविम्बे ।
तत्कर्णवृत्ते हि मृदुस्फुटाख्य-
माचार्यवर्याः प्रवदन्ति खेटम् ॥ ३५५ ॥
केचित्तु मध्यः किल मध्यकक्षा-
वृत्तेऽथ मन्दश्रवणोत्थवृत्ते ।
मन्दस्फुटः स्पष्टखगस्तु शीघ्र-
कर्णोत्थवृत्ते निजकक्षिकायाम् ॥ ३५६ ॥

तेन स्फुटस्यानयनाय शैघ्र्यं
फलं तु मन्दस्फुटरूपमध्यात्।
विज्ञायतेतो मृदुकक्ष्यिकैव
मध्याख्यकक्षा सुधिया प्रकल्प्या॥ ३५७॥

तत्राप्युदोर्ज्यापरिधिश्रुतीनां
ज्ञानाङ्गवेदाप्तु फलं सुबोधम्।
परं तु तास्व त्रिगुणोत्थवृत्ते
नो मन्दकर्णोत्थवृतौ तु सिद्धाः॥ ३५८॥

अतोत्र मन्दश्रवणाहतास्ता-
स्त्रिभज्यया संविहृताः स्फुटाः स्युः।
स्वमन्दकर्णोङ्गवकाक्षिकायां
सदा फलस्यानयनाय योग्याः॥ ३५९॥

स्वेनाहते परिधिनेति कुभास्करोक्त्या
स्पष्टीकृताच्च परिधेर्मृदुकर्णतश्च।
यद्दोःफलं भवति सान्त्यफलज्यकैव
स्पष्टा ततः स्फुटभुजज्यकया यथोक्त्या॥ ३६०॥

ह्रतं स्वशीघ्रान्त्यफलज्यकायाः
स्पष्टीकृताया इह दोःफलं यत्।
स्फुटाप्तुकर्णादनुपाततस्त-
च्छैघ्र्यं फलं भास्करसंमतं स्यात्॥ ३६१॥

कक्षाप्रभेदेन फलप्रभेदात् स्वार्षविरोधान्निजबुद्धिमौढ्यात्।
इतीरितं तन्न हि युक्तियुक्तं प्रत्यक्षयुक्त्या परिबाधितत्वात्॥३६२॥

यतोत्र मन्दश्रवणाग्रसंस्थो यो मन्दखेटोस्ति तदुक्तरीत्या।
यथोक्तनद्राकपरिधेस्तु केन्द्रस्वरूपसिद्ध्या स तु सुप्रसिद्धः॥३६३॥

कर्णाग्रगस्त्वेत्परिधिर्यथोक्तः कर्णाग्रके तत्करणं त्वयुक्तम् ।
चेन्नैव तर्ह्यत्र कृतेपि मन्दकर्णानुपाते परिधौ स्फुटो न ॥३६४॥

उक्तास्त्वशैद्यः परिधिर्यतोऽत्र
मृदुश्रुतिव्यासदलोत्थवृत्ते ।
भांशान् विभागान् परिकल्प्य नो त-
द्विभागमानात् परिधेर्मितिः सा ॥ ३६५ ॥

एवं हि दोर्ज्यान्त्यफलज्यकात-
त्कर्णा अपि स्पष्टतरा न योग्याः ।
यद्वृत्तगं तद्वृतिभांशमाना-
द्योग्यं परिध्यादि न चान्यमानात् ॥ ३६६ ॥

किं चाथ मन्दश्रवणोत्थवृत्ते भांशा अपि स्पष्टतराः कृता ये ।
चेत्तद्वशात् त्वं वदसि स्फुटत्वं पूर्वोदितं तर्हि विभिन्नजात्या ॥३६७॥

स्वदोःफलार्थं त्वनुपात उक्तः
स्वभांशकैस्त्रिज्यकया कथं सः ।
युक्तः स्फुटात्तत्परिधेः स्फुटान्त्य-
फलज्यकातः स्फुटदोर्ज्यकातः ॥ ३६८ ॥

स्वेनेति पद्यान्निजभास्करोक्त्या
किं चाथ पूर्वं परिधिः स्फुटो यः ।
तद्दोतितो नान्त्यफलज्यकात्र
स्फुटेति मौढ्यादुदितं न सत्तत् ॥ ३६९ ॥

यद्गुणो हि परिधिः परिधिस्त्वेत्तद्गुणा गणकविस्तृतिरेव ।
विस्तृतिर्भवति वासनयायं तद्विदां हि नियमोऽस्ति सुयुक्तः ॥३७०॥

स्वमन्दकर्णाङ्कवृत्तभांशप्रमाणतस्य क्रियते पुरोक्तम् ।
नोचोच्चवृत्तान्त्यफलस्फुटत्वे यथोक्तमेवेत्यविशेष एव ॥ ३७१ ॥

संसाधने शीघ्रफलस्य कक्षाभेदेप्यतो गौरवतस्तदुक्तम् ।
यदत्र तन्नादरणीयमार्यैः स्वार्षाविरुद्धैः फलतस्त्वभेदात् ॥ ३७२ ॥
मिथ्याशयं भास्करसत्कृतेश्च यः स्वानुकूलं विवृणोति तन्त्रे ।
अप्युद्वपक्षाश्रयणाद्विनष्टः स्वयं परं नाशयतीह तं च ॥ ३७३ ॥
इत्थं सिद्धाः स्फुटाः किं ते भवृत्ते वा विमण्डले ।
संशयग्रस्तविदुषां निर्णयं तं वदाम्यहम् ॥ ३७४ ॥
भवृत्तसंस्थप्रतिमण्डलस्य भ्रमेण तत्स्थं रविमण्डलं हि ।
भवृत्तगं सत्प्रकरोत्यजादेर्गृहांशलिप्ताविकलादिभोगम् ॥ ३७५ ॥
विमण्डलस्थप्रतिमण्डलस्य भ्रमेण चैवं विधुपूर्वविम्बम् ।
विवृत्तगं सत्प्रकरोत्यजादेर्गृहांशलिप्ताविकलादिभोगम् ॥ ३७६ ॥
विवृत्तगात्तत्प्रतिमण्डलाच्च विम्बस्य भोगो भवृतौ न तद्वत् ।
भवृत्तगात्तत्प्रतिमण्डलाद्वा विम्बं विवृत्ते न भवेत्कथं चित् ॥ ३७७ ॥
यतो यद्वृत्तसंस्थेन प्रतिवृत्तेन यो भ्रमः ।
विम्बस्य सोत्र तद्वृत्तसंस्थित्यैव भवेद्ध्रुवम् ॥ ३७८ ॥
विम्बे येषां विवृत्ते स्यात्ते स्युः स्पष्टा विमण्डले ।
पातस्थानाद्विवृत्ते यद्विम्बावध्यन्तरं तु यत् ॥ ३७९ ॥
सपातखेटतुल्यं स्यात्कर्णरूपं शरस्त्विह ।
कोटिः कदम्बवृत्ते स्याच्छराग्रावधि पाततः ॥ ३८० ॥
भवृत्ते वाहुरित्थं यच्चापजात्यं भवेदिह ।
सपातखेटवाणाभ्यां वाहुश्चापात्मकस्तु यः ॥ ३८१ ॥
गणिताद्भवृतौ सोत्र कार्यः स्वीयपदक्रमात् ।
पातोनितो गोलरीत्या भचक्रे स स्फुटग्रहः ॥ ३८२ ॥
अतो यथोक्तरीत्यैव चन्द्राद्या ये स्फुटग्रहाः ।
विमण्डलगतास्ते च विज्ञेया भवृतौ नहि ॥ ३८३ ॥

अथो भवृत्तेपि यथात्र ते स्युः स्फुटास्तथाहं प्रवदामि सम्यक् ।
स्वयोग्यतत्यातयुतस्फुटस्य खेटस्य कोटिज्यकया विनिघ्नी ॥३८४॥
त्रिभज्यकेषूद्भवकोटिमौर्व्योद्धृताप्तचापांशविहीनखाङ्काः ।
खाग्न्युद्धृतांशा इह राशयः स सपातखेटस्य भुजो गृहाद्यः ॥३८५॥
आद्ये पदे ह्याद्दिपदेषु भार्द्धाद्युतोथ भार्द्धेन युतोथ चक्रात् ।
च्युतः खपातेन विहीनितोसौ भमण्डले स्पष्टखगः स इह्नः ॥३८६॥
इत्थमानयनं पूर्वैस्त्यक्ता स्वल्पान्तराद्बुधाः ।
विमण्डलगता एव गृहीताः क्रान्तिमण्डले ॥ ३८७ ॥
यतो विनेषु सर्वत्र भवृत्तौ स्वीकृता ग्रहाः ।
फलार्थं गणितेर्काद्यैः केवलेषुर्विवृत्तजात् ॥ ३८८ ॥
यत्तावनैकेन दिनान्तरेण स्थितौ तु यौ स्पष्टखगाविनस्य ।
तदन्तरं स्पष्टगतिर्ग्रहस्य ह्रज्ञा भवेत्तत्समयान्तराले ॥३८९॥
तत्राग्रिमस्चेदधिकस्तदा स्यादवक्रगोल्पो यदि वक्रगः स्यात् ।
वक्रस्य मार्गस्य भवेत्प्रवृत्तौ सदैव खेटस्फुटगत्यभावः ॥३९०॥
कृतर्त्तु चन्द्रै १६४ र्वेदेन्द्रैः १४४ शून्यत्र्यकै १३० र्गुणाष्टिभिः ।
१६३ शरह्रद्रै ११५ स्वकशुद्धचलकेन्द्रांशकैः कुजात् ॥ ३९१ ॥
भवन्ति वक्रिणस्तैस्तु
स्वैः स्वैश्चक्राद्विशोधितैः ।
अत्रमिष्टांश १९६ । २१६ । २३० । १९७ । २४५ तुल्यैः स्वै-
स्तैरेवोज्झन्ति नक्रताम् ॥ ३९२ ॥
वक्रं गतोपीन्द्रदिशं राजवद्व्रजति ग्रहः ।
भोगस्यापचयात्प्रत्यग्वृद्धत्वातवन्नहि ॥ ३९३ ॥
ग्रहोनुलोमं निजकक्षिकायां
भ्रमन्नपि स्वाजमुखात् स्फुटोसौ ।

स्वनीचभीतश्चलतीह वक्रा-
दिको विलोमं शृणु तत्र युक्तिम् ॥ ३९४ ॥
भौमादिकानां चलतुङ्गभुक्तिः
सदाधिका मध्यमभुक्तितोतः ।
खगोनतुङ्गं परिकल्प्य केन्द्रं
तदाशुकेन्द्रं भ्रमति स्वतुङ्गात् ॥ ३९५ ॥
व्यस्तं त्रिभेष्व प्रतिमण्डलेन्त्यफलं युतोनोनयुतं पदानि ।
तद्वर्द्धमानं चलकेन्द्रमूह्यं चलोच्चतः स्वाशु फलप्रसिद्धै ॥ ३९६ ॥
फलान्तरस्यापचयोस्त्यभावस्थानाच्च तस्योभयतः सदैव ।
एवं तथैवोपचयोन्त्यसंज्ञफलस्थलाच्चोभयतोस्त्यनार्षः ॥ ३९७ ॥

सौरे तु मध्यकक्षावृत्तप्रतिवृत्तयोगे फलान्तराभावस्तत उपचयः मृदुस्पष्टगत्यधिकपूर्वमृदुस्पष्टग्रह एवाग्रिमो मृदुस्पष्टग्रहोस्ति सततं तौ स्वस्वशीघ्रफलसंस्कृतौ स्फुटौ भवतः । तदन्तरं स्फुटभुक्तिः पूर्वस्फुटग्रहोनाग्रिमस्फुटग्रहरूपा । फलान्तरसंस्कृतमृदुभुक्तिसमा । तद्युतपूर्वस्पष्टोग्रिमस्फुट इति युक्त्या सर्वत्र वासना सुगमा । सा यथा । तत्राद्यपदे धनफलवृद्ध्या फलान्तरं धनं तद्युक्तमृदुभुक्त्याद्यस्फुटादधिक एवाग्रिमस्फुटः । परं तत्र फलान्तरापचयादपचय एव तस्याधिकतायां । एवं द्वितीयपदेपि धनफलापचित्या फलान्तरमृणं तदूनमृदुभुक्तिरेव स्फुटभुक्तिस्तत्र यावदल्पत्वं मृदुभुक्तेः फलान्तरस्य तावदुक्तपूर्वस्फुटाग्रिमस्फुटो ह्रासक्रमेणाधिक एव फलान्तरोपचयात् । अनन्तरं यदा फलान्तरमृणं मृदुभुक्तिसमं तदा तदन्तरे स्फुटभुक्त्यभावात् पूर्वापरस्पष्टौ समौ भवतः नीचासन्ने तत्र वक्रगतिप्रारम्भस्तदग्रिमस्याल्पत्वात् यतो नीचं यावदुपचयेन मृदुभुक्त्यधिकर्णफ-

त्वान्तरे सति मृदुगत्यूनर्णफलान्तररूपर्णस्फुटभुक्त्या विहीनपूर्वस्पष्ट एवाग्रिमस्फुटोस्ति। फलान्तरोपचयात्तदृणस्फुटभुक्त्युपचित्या नीचं यावदतिन्यून एवाग्रिमस्फुटः पूर्वस्फुटात्। अनन्तरं तृतीयपदेपि ऋणफलवृद्ध्या फलान्तरमृणं मृदुगत्यधिकत्वान्मृदुगत्यूनितं सद्धनमेवेति तत्स्फुटभुक्त्या विहीन एवाद्योग्रिमः स्यात्। अपचयेनर्णफलान्तरं यदा तन्मृदुगतिसमं तत्र तदन्तरे स्फुटगत्यभावात्पुनः पूर्वसम एवाग्रिमस्फुट इति नीचासन्ने मार्गगतिप्रारम्भोपि तदग्रिमस्याधिकत्वात्। अनन्तरमपचयात् फलान्तरं मृदुगतेर्यदाल्पं तदा तदन्तरे धनगस्फुटभुक्त्या युक्तपूर्वस्फुट एवाग्रिमस्फुटः। चतुर्थपदेपि ऋणफलह्रासाद्धनगफलान्तरयुक्तमृदुभुक्तिरूपस्फुटभुक्त्याधिक एव पूर्वोग्रिम इति फलान्तरवृद्ध्या वृद्धिक्रमेणैव पूर्वस्फुटादधिक एवोत्तरस्फुटो वरीवर्त्ति। पूर्वैस्तु विलक्षणमृदुगतिवशान्नियमेनैकरीत्या तदानयनस्याशक्यत्वात् स्वल्पान्तरेण ग्रहमध्यभुक्त्यैव स्फुटभुक्त्यभावकालजाश्चलकेन्द्रांशाः पाठपठिताः सुखार्थं। तदासन्नस्थले यदा चलफलान्तरं मृदुगतिसमं तदा तत्र स्फुटभुक्त्यभावस्थानं वास्तवं बोध्यम् धनफलह्रासे वक्रारम्भजमृणफलवृद्धौ मार्गारम्भजमिति। अथोच्चोनग्रहसमेपि चलकेन्द्रे तत्केन्द्रमपचीयमानमुच्चादनुलोमगं तद्वशात्तृतीयपदे वक्रारम्भो द्वितीयपदे मार्गारम्भः नीचासन्नपूर्ववक्रमार्गकेन्द्रव्यत्यासेन ज्ञेयः। अत्र स्फुटवन्मन्दस्फुटग्रहेपि कथं न भवेद्वक्रत्वमिति नाशङ्कनीयं मन्दफलान्तरस्योक्तवत्तन्मध्यग्रहान्तररूपमध्यगतितुल्यत्वाभावात्॥

मया सच्छिष्यबोधार्थं वक्रमार्गत्ववासना।

सुबोधा विहितान्यैः सा सम्यङ्नैवोदिता यतः ॥ ३९८ ॥

कक्षामध्यगतिर्यक्स्थरेखास्वप्रतिवृत्तयोः ।
सम्पाते ग्रहबिम्बं चेत्फलाभावो गतेस्तदा ॥ ३९९ ॥

लल्लखण्डनकुगर्वकुबुद्ध्यैवेति यन्निगदितं निजतन्त्रे ।
भास्करेण तदसद्धि नितान्तं गोलसद्गणितयुक्तिविरोधात् ॥४००॥

येन तत्र परमं खचरस्य स्यात् फलं बुध तदग्रिमजं तु ।
स्यात्तदल्पमनयोर्विवरन्तु दृश्यते गतिफलं किल नान्यैः ॥४०१॥

सम्पातस्थितमेवैतद्बिम्बं नैकदिनान्तरे ।
फलसाम्यात् फलाभावात्तदुक्तं येन सङ्गतम् ॥ ४०२ ॥

अथात्र पूर्वं परतस्तदुक्तस्थानान्मितित्वैकदिनान्तरेण ।
साम्यं भवेत्तत्फलयोर्ग्रहस्य तत्पूर्वकाले नियतं गतेश्च ॥ ४०३ ॥

शून्यं फलं स्यात्तदुदीरिते हि
सम्पातकाले नहि तत्कथं चित् ।
इत्थं मदुक्तं ग्रहगोलरीत्या
मध्यस्थबुध्या सुधिया विभाव्यम् ॥ ४०४ ॥

सम्पाततः प्रागत एव मध्य-
कक्षाख्यवृत्तप्रतिवृत्तयोगे ।
यथोचितः श्रीरविणाशुभुक्तेः
फलस्य नाशोऽस्त्युदितः स्वभावे ॥ ४०५ ॥

सम्पातगं तं च बलात्प्रकल्प्य
तदासनां च प्रवदन्ति मूढाः ।
अन्योक्तसद्युक्तिफलोत्थभावे
ग्रौढ्ये त्वभावे परिकल्प्य मिथ्या ॥ ४०६ ॥

भङ्गोदयेप्युक्तफलस्य युक्त्या

नीचोच्चदेशेन फलं ग्रहस्य।
यथोक्तसम्पातगते ग्रहे तु
परं फलं स्यात्प्रतिवृत्तभङ्ग्याम् ॥ ४०७ ॥
नीचोच्चभङ्ग्या परिधौ तु यत्र स्पृष्ट्वैकदेशं क्षितिगर्भसूत्रम् ।
वहिर्गतं स्यान्नियमेन तत्र स्पर्शस्थले पूर्णफलं ग्रहस्य ॥४०८॥
तन्मध्यकक्षास्थलतोप्यधःस्थं तदन्यदेशे नहि तत्कथं चित् ।
शिल्पज्ञवेद्यां ग्रहगोलसंस्थां जानन्ति नेमां जडबुद्धयस्तु ॥४०९॥
यथा कदम्बद्वयतो भगोल-
स्वरूपकक्षाभिधगोलकोस्ति ।
अर्कस्य तद्वद्विधुकक्षिकाख्यो-
गोलः कदम्बाद्विकदम्बकाभ्याम् ॥ ४१० ॥
षड्भान्तरेणात्र मिथः स्थिताभ्यां
परेषुभागैस्तु विमण्डलाख्यः ।
तद्गोलके यद्विकदम्बमध्या-
त्खाङ्कैस्तु वृत्तं तु विमण्डलं स्यात् ॥ ४११ ॥
तत्केन्द्रकं तु क्षितिगर्भ एव
ततः स्वमान्दान्त्यफलज्यकाग्रे ।
यथोक्तवत्स्यात्प्रतिमण्डलाख्यो-
गोलो विवृत्तेस्ति यथा भवृत्ते ॥ ४१२ ॥
यथा भवृत्ते प्रतिवृत्तगोलपरोच्चगोलौ रविगोलसंस्थौ ।
तद्वद्विधोस्त्र प्रतिवृत्तसंज्ञपरोच्चसंज्ञावपि तौ विवृत्ते ॥ ४१३ ॥
तदुच्चगोलोर्ध्वगतो विपाताभिधोस्ति गोलस्त्र ततोपि तद्वत् ।
ऊर्ध्वं भपाताभिधगोलकस्तद्द्वयं शरस्यानयनाय योग्यम् ॥४१४॥
परोच्चगोलो विकदम्बकाभ्यां

यथा तथोर्ध्वस्थविपातगोलः ।
तत्स्थानकाभ्यामथ यस्तदूर्ध्वो-
भपातगोलः स्वकदम्बकाभ्याम् ॥ ४१५ ॥
पातस्य गत्या भ्रमतीह तत्राधः प्राक् तथा पश्चिमतो द्वितीयः ।
आद्यान्त्यदेशद्वयमध्यतो ये तद्गोलयोः खाङ्कलवैस्तु वृत्ते ॥४१६॥
विवृत्तकापक्रममण्डलाख्ये
तयोः परं ह्यन्तरकं त्रिभे स्यात् ।
सम्पातदेशात्त्रिभगर्भ एव
केन्द्रं च तत्पातजगोलयोः स्यात् ॥ ४१७ ॥
विपातगोलभ्रमणात्स्वपातान्मन्दस्फुटः पातयुतो विवृत्ते ।
भपातगोलभ्रमणादजादेर्व्यस्तं भवृत्ते भ्रमति स्वपातः ॥ ४१८ ॥
विवृत्तमन्दस्फुटगं च बिम्बं
भमण्डलात्तद्धि कदम्बवृत्ते ।
यदन्तरे सोऽस्ति शरोत एव
तत्साधनं चास्ति मृदुस्फुटेन्दोः ॥ ४१९ ॥
यस्त्वाथ शीघ्रप्रतिमण्डलस्य
गोलो वरीवर्त्ति कुजादिकानाम् ।
तत्र स्थिते द्राक्प्रतिमण्डलेजा-
न्मृदुस्फुटोऽसौ भ्रमति स्वबिम्बे ॥ ४२० ॥
एको मृदुस्पष्ट इहास्ति मन्द-
कर्णोत्थमध्याभिधकक्षिकायाम् ।
चलाख्यनीचोच्चकवृत्तकेन्द्रे
स्यात्तत्समो बिम्बगतो द्वितीयः ॥ ४२१ ॥
नीचोच्चवृत्तप्रतिवृत्तयोगे

शैघ्र्ये च तन्मेषमुखात्प्रसिद्धः ।
चलाख्यमूर्त्तप्रतिमण्डलाख्य-
विमण्डलीयाम्बरगोलसंस्थः ॥ ४२२ ॥
पूर्वोदितौ तावित्त्व पातगोलौ ।
तद्गोलपृष्ठोर्ध्वगतौ शरार्थम् ।
परोच्चगोलोर्ध्वगतौ विधोस्तौ
तद्वात्ययादत्र गतौ तदन्तः ॥ ४२३ ॥
यद्देशमध्यात्प्रतिमण्डलाख्यो-
गोलः स तद्देशत एव चायम् ।
विपातगोलोस्ति चलस्तदूर्ध्वो-
भपातगोलोस्ति परस्ततोपि ॥ ४२४ ॥
परेषुभागान्तरितप्रदेशाच्चलोप्यथोक्तखदिशि स्वगत्या ।
यदस्ति शीघ्रप्रतिवृत्तगोलकेन्द्रं हि तद्गोलकयोस्तदेव ॥ ४२५ ॥
एवं हि पाताभिधगोलपृष्ठकेन्द्रस्थिताद्गोलजमध्यदेशात् ।
गोलार्द्धवृत्ते भवतश्च ये ते विमण्डलस्यापममण्डलस्थे ॥ ४२६ ॥
शैघ्र्याभिधे स्तः प्रतिमण्डलाख्ये
भिन्ने तदैक्यात्परमान्तरं स्यात् ।
उक्तः परेषुः प्रतिमण्डलाख्य-
शैघ्र्यस्वगोलस्थितिरेवमस्ति ॥ ४२७ ॥
अन्यस्तु कक्षाभिधगोलकस्तौ
द्वावत्र बिम्बाश्रयतो भवेताम् ।
अथात्र शीघ्रप्रतिवृत्तगोले
बिम्बात्कदम्बोत्थ वृतौ तु या स्यात् ॥ ४२८ ॥
विभाख्यशैघ्र्यप्रतिवृत्तभेद-

जा सैव बिम्बान्निजकर्णिकायाम्।
विभाख्यवृत्तान्तरशिञ्जिनी त-
च्चापं ततः कर्त्तुमशक्यमस्मात्॥ ४२९॥
तत्र स्थितं यद्विभसंज्ञवृत्ता-
न्तरं तु शीघ्रश्रवणोत्थवृत्ते।
तन्मानतस्तत्त्रिगुणप्रमाणात्
साध्यं तु तच्चापमिषुः स्वगोले॥ ४३०॥
विभाख्यतन्मण्डलजान्तरं स्या-
द्विम्बाश्रयेणैव कदम्बवृत्ते।
युक्त्यागमोक्तेपि म्टदुस्फुटेषै।
सद्वासनान्याः स्फुटखेटतस्तम्॥ ४३१॥
वदन्ति पाठोक्तपरेषुभागै-
स्स्वोक्तयेन्दुवह्नीममुखग्रहाणाम्।
विधोर्यथोक्तौ द्वि परेषुपातौ
स्फुटौ परेषां निजकर्णिकायाम्॥ ४३२॥
कुजाच्च पाठोक्तपरेषुलिप्ताः
सौरोदिता मध्यमलिप्तिकास्ताः।
त्रिज्यागुणाः स्वान्त्यचलाख्यकर्णो-
द्धृताः स्फुटाः स्युर्निजकर्णिकायाम्॥ ४३३॥
विलोमतद्दृक्फलसंस्कृतोक्त-
पातः स्फुटोस्माद्विवृतिस्फुटाख्यात्।
खेटात्सपातः खचरः स एव
यथोक्तपाताद्यम्टदुस्फुटाख्यः॥ ४३४॥
अस्माद्यथोक्त्या भवृतौ सपातो-

यो मध्यपातेन विहीनितः सः ।
कार्यः स्फुटः स्यान्निजकक्षिकायां
मेषादितो बिम्बकदम्बवृत्ते ॥ ४३५ ॥
बिम्बीयकक्षास्थशरः कथं चि-
न्न ज्ञायतेऽनार्षविरुद्धरीत्या ।
तस्मान्मदुक्तस्फुटखगाच्छरस्य
संसाधनं गोलविदा विधेयम् ॥ ४३६ ॥
गोलानुसारं रविणा स्वशास्त्रे प्रोक्तं मयार्थं किन्तु तन्मयोक्तम् ।
सतां शरोत्थभ्रमभञ्जनार्थं जानन्ति नेत्थं जडबुद्धयस्तु ॥ ४३७ ॥
विधोः स्वकक्षागत एव पातोऽन्येषां तु शीघ्रप्रतिमण्डलस्थः ।
परोक्तवाणोद्भववारणार्थं स्फुटः परेषु त्विह मध्यमो न ॥ ४३८ ॥
अविदित्वैव यद्गोलमुक्तमार्षविरोधतः ।
शरस्यानयनं सार्वभौमेऽस्ति तदसद्ध्रुवम् ॥ ४३९ ॥
चलांशैः सुसंस्कारितस्याथ यस्या-
ग्रिमांशोदयांशा हताः स्वीयभुक्तैः * ।
कलास्वक्षलिप्तायुताः स्युः स्फुटाख्या
अहोरात्रलिप्ताश्च तास्तत्खगस्य ॥ ४४० ॥
हतायनांशार्कलवाग्रिमांशोदयाद्धतं द्व्यर्यफलं कलाद्यम् ।
गतिघ्नमर्कद्युनिशोद्धृतं तद्भ्रहेऽर्कवद्वाङ्गफलं कलाद्यं ॥ ४४१ ॥
सम्पातस्फुटमध्यार्कविषुवत्कलिकान्तरम् ।
यदल्पमर्कमान्दीयाः सर्वा वाक्रन्तरोचिताः ॥ ४४२ ॥
गतिवियोगगतिस्तिथिसिद्धौ गतियुतिस्तु गतिर्युतिसिद्धौ ।
ग्रहगतिर्गतिरस्ति भसिद्धौ तिथिगतिश्च गतिः करणार्थम् ॥४४३॥

---

* अत्र भुक्तिः स्वसावनान्तर्गता इति कमलाकरस्यैव टिप्पणी ।

केवलस्फुटचन्द्रार्कवशात्तिथ्यादिकं स्मृतम् ।
स्वागमोक्तयायनांशैस्तु संस्कृताभ्यामिदं नहि ॥ ४४४ ॥

विरविचन्द्रलवा रविषड्हृताः
फलमितास्तिथयः करणानि च ।
कुरहितानि च तानि ववादितः
शकुनितोऽसितभूतदलादनु ॥ ४४५ ॥

ग्रहकलाः सरवीन्दुकला हृताः
खखगजैस्त्र भयोगमिती क्रमात् ।
अथ हृताः स्वगतैष्यविलिप्तिका
निजजवेन गतागतनाडिकाः ॥ ४४६ ॥

तात्कालिकेन्द्वर्कवशात् स्फुटत्वं
भवेत्खकालस्य ततोऽसकृच्च ।
तिथ्यादिकानां स्फुटता विधेया
सुसूक्ष्मकालानयनप्रवीणैः ॥ ४४७ ॥

यातैष्यनाडीगुणिता द्युभुक्तिः षष्टिभाजिता ।
लब्धोनयुग्ग्रहस्तात्कालिको वक्री विलोमतः ॥ ४४८ ॥

अग्निमोदयकालस्यासन्ने गत्यानया स्मृतम् ।
चालनं स्वोदयासन्ने तत्पूर्वगतितो हि सत् ॥ ४४९ ॥

श्रीसूर्यमुख्यरचितस्त्रमपास्य लोके
यत्केवलं मुनिकृतं नहि तत्प्रमाणम् ।
तत्स्थूलहृद्गतसुसूक्ष्ममतो विलोक्यं
देवर्षिवाक्यजबलाबलसद्विवेकात् ॥ ४५० ॥

यद्ब्रह्मगुप्तगदितं नतकर्म तत्तु
दृग्गोलसद्गणितवासनया न लभ्यम् ।

तेनार्षखस्वनवमाङ्गद्वयोगसिद्धौ
तस्मैव सद्बुधवरैरिति चिन्तनीयम् ॥ ४५१ ॥

अनाद्यनन्तकालेस्मिन् कदम्बाभ्यां चलोनिशम् ।
भगोलोसौ वरीवर्त्ति तत्सक्तं राशिमण्डलम् ॥ ४५२ ॥

तदंशाचलभागैस्तु परपूर्वदिशोस्खलम् ।
कालो नैतादृशो यस्मिन्नचलोयं कथं च न ॥ ४५३ ॥

नाडीभवृत्तयोर्यत्र सम्पातः पात एव सः ।
चलांशसिद्ध्यै सौरोक्ता ज्ञेयास्तद्भगणा बुधैः ॥ ४५४ ॥

सृष्ट्याद्यकालेङ्कितमेषवक्त्रं
पूर्वं तु नाडीवलयस्थितं हि ।
ततस्य सप्तांश्वि २७ लवैश्चलांशै-
र्भमण्डलं पश्चिमतोथ गत्वा ॥ ४५५ ॥

ततः परावर्त्य च तैस्तु भागैर्यथा स्थितं मेषमुखं ततस्य ।
तैरेव तच्चेन्द्रदिशीह भूत्वा ततः परावर्त्य लवैस्तु तैस्य ॥ ४५६ ॥

यथास्थितं मेषमुखं पुनस्य स्वाकारतः स्वापमवृत्तगत्या ।
इत्थं हि देवैर्मुनिभिः स्वतन्त्रैरुदीरितं स्वीयकृतौ यथार्थम् ॥४५७॥

चतुःप्रकारावगतोयमेको-
ऽयनांशकानां भगणोथ ते च ।
युगे खखाङ्क ६०० प्रमितास्सहस्र-
घ्नास्ते भवेयुर्भगणास्य कल्पे ॥ ४५८ ॥

सृष्ट्यादितो गताब्दा ये खखयुग्माद्रि ७२०० भाजिताः ।
भगणाद्यं फलं यत्स्याद्दर्शाद्यौ सायनो ग्रहः ॥ ४५९ ॥

भगणानां परित्यागाद्राश्याद्यस्य भुजांशकाः ।
ते तु त्रिघ्ना दशाप्तास्य विज्ञेया अयनांशकाः ॥ ४६० ॥

चलांशकाश्च ते स्वर्णं तुलाजादिगते क्रमात् ।
अयनांशग्रहे ज्ञेयास्तत्संस्कारवशाच्च सः ॥ ४६१ ॥

चलाख्यखेटोयनखेचरश्च
ज्ञेयस्ततः क्रान्तिचरोदयाद्यम् ।
साध्यं तु सम्पातत एव तेषां
स्वरूपसिद्धा गणितावबोधात् ॥ ४६२ ॥

अन्येषामतथात्वेन सम्पातान्मेषवल्लतः ।
अदृष्टफलसिद्ध्यर्थं साधनं न कथं चन ॥ ४६३ ॥

चलार्कसङ्क्रमे पुण्यं कथमुक्तमिदं किल ।
नाशङ्कनीयं विदुषा तदुक्तेरर्थवादतः ॥ ४६४ ॥

अर्काद्युक्तमबुध्वैव तद्विरोधाच्छिरोमणौ ।
मुञ्जालोक्तायनांशा ये प्रोक्तास्त्याज्या बुधैस्तु ते ॥ ४६५ ॥

कश्चित् परं तच्चलनं जिनांशैः
स्वीकृत्य तस्याप्ययनग्रहस्य ।
क्रान्त्यंशतुल्यानयनांशकांश्च
मन्दः सदैवाह न तन्मतं सत् ॥ ४६६ ॥

यतस्त्रिभागे चलने परस्य २४
तदुक्तरीत्या तु जिनज्यकार्द्धात् ।
चापं चलांशास्त्वलने तथार्द्धे १२
जिनज्यकावर्गदलस्य मूलात् ॥ ४६७ ॥

चापं चलांशास्त्वयनग्रहोत्थक्रान्त्यंशका एव तदुक्तरीत्या ।
भचक्रपूर्वापरदिग्भ्रमाद्यासिद्धं न तत्किं गणितं फलार्थम् ॥४६८॥

ब्रह्मार्कचन्द्रानुगतैर्मुनीन्द्रैः
स्फुटाधिकारस्फुटखेचरैश्च ।

अजादिसिद्धैरुदितः स्वतन्त्रै-
स्तिथ्यादिकानां फलनिर्णयोऽस्ति ॥ ४६९ ॥
परैस्तथा रोमकपत्तनस्थैः कृतायनांशस्फुटखेचरैश्च ।
भनाडिकामण्डलयोगदेशादेवोदितस्तत्फलनिर्णयोऽस्ति ॥४७०॥
फलोपपत्त्यै बहवोऽप्युपाया-
अतोऽजभेदेऽपि तयोर्न बाधः ।
तेनाविरोधेऽपि विरोधतो यैः
प्रौढ्योदितं स्वीयकृतौ न सत्तत् ॥ ४७१ ॥
स्थूलत्वाच्चलसङ्क्रान्तिमूर्त्तौक्ता मुनिभिः पुरा ।
सूक्ष्मत्वाद्राशिसङ्क्रान्तिरमूर्त्ताप्युदितेह तैः ॥ ४७२ ॥
ग्रहबिम्बं स्वभुक्त्याप्तं षष्टिघ्नं तद्दलोन्मिताः ।
नाड्यः पूर्वापराः स्वस्य पुण्यकालः स्वसङ्क्रमात् ॥ ४७३ ॥
तत्रार्कस्यातिपुण्याः स्युरन्यखेटस्य सङ्क्रमात् ।
स्वसङ्क्रान्तौ ग्रहो मिश्रं प्रददाति फलं नृणाम् ॥ ४७४ ॥
स्वाकाशगोलभ्रमणाद्यत्र खे बिम्बगोलकः ।
ग्रहाणां क्षितिगर्भाद्यैर्योजनैर्योजनश्रुतिः ॥ ४७५ ॥
स्फुटाख्या सा गोलविदा ज्ञेया तत्साधनं शृणु ।
तत्र चन्द्रार्कयोरेकफलत्वाद्ग्रहणेनोदिता ॥ ४७६ ॥
मध्ययोजनकर्णघ्नौ त्रिज्याप्ताविनचन्द्रयोः ।
ज्याकर्णौ योजनस्पष्टौ भवेतामन्यथोच्यते ॥ ४७७ ॥
कुजादिकानामथ मन्दशैघ्र्य-
चतुःप्रकारस्फुटतान्यथात्वात् ।
सूक्ष्मस्य सद्वास्तवरीतितस्तत्
संसाधनेऽस्यात्र महान् प्रयासः ॥ ४७८ ॥

लब्धिस्तथा नैवमतोऽविशेषात्सतां सुखेन व्यवहारसिद्धै ।
वदामि कर्णानयनं महर्षिशाकल्यपूर्वोदितसौररीत्या ॥ ४७९ ॥
यः खेटजान्त्यश्रवणो ज्यकोत्यस्तत्त्रिज्ययोर्योगदलं हि कर्णम् ।
प्रकल्प्य तन्मध्यमकक्षिकास्थकर्णेन निघ्नस्त्रिगुणोद्धृतस्य ॥ ४८० ॥
स्पष्टो भवेद्योजनकर्ण एषः खाकाशगोन्याम्बरगादिभिन्नः ।
श्रीविष्णुधर्मोत्तरजोपि चायं यत्सर्वशब्दादिह सर्वजीवा ॥४८१॥
त्रिज्यैव बोध्याथ तदन्त्यकर्णा-
विशेष उक्तः स तु योग एव ।
इत्थं प्रमाणार्षवरोक्तशास्त्रं
मुक्त्वा स्वसिद्धान्तशिरोमणौ यत् ॥ ४८२ ॥
यत्सार्वभौमे च कृतं तु कर्णसंसाधनं योजनमानतस्तत् ।
तच्छास्त्ररीत्या प्रवदाम्ययोग्यपरग्रहाकाशजगोलसंस्थाम् ॥४८३॥
ग्रहस्य कक्षा चलकर्णनिघ्नी
स्फुटा भवेद्व्यासदलेन भक्ता ।
तद्व्यासखण्डान्तरितः कुमध्या-
त्स भ्राम्यते हि प्रवहानिलेन ॥ ४८४ ॥
योजनकर्णौ गुणितौ दर्येन्द्वोर्मन्दकर्णाभ्याम् ।
त्रिज्याभक्तौ स्पष्टौ योजनकर्णौ तयोर्भवतः ॥ ४८५ ॥
भौमादीनां या श्रुतिर्योजनाख्या
शिघ्रश्रुत्या सा हता त्रिज्ययाप्ता ।
स्पष्टाः कर्णा योजनाख्या भवन्ति
न व्यासार्द्धाः स्पष्टकक्षोद्भवा हि ॥ ४८६ ॥
पाठोक्तमध्यश्रुतियोजनैर्ज्या कर्णात्फलस्यानयनप्रसिद्धात् ।
दृष्टात्मयुक्त्या सदपीदमुक्तं दुष्टं भवेत्तत्त्वविचारतोत्र ॥ ४८७ ॥

इत्थमानयनं दृष्टं दृष्ट्वास्या योजनश्रुतेः ।
अन्यथानयनं देवैर्मुनिभिश्च कृतं पुरा ॥ ४८८ ॥
विम्बान्यन्यान्यपि स्वान्यकक्षास्थानीह तन्मतम् ।
अतः कर्णनिरासोयं गणितेनान्यथोच्यते ॥ ४८९ ॥
त्रिज्याघ्नं स्फुटकर्णाप्तं लिप्ताविम्बमिनादृतम् ।
ग्राह्यं यद्वासनावाह्यं कल्प्यं भास्करादिभिः ॥ ४९० ॥
स्वकृतावुक्तमप्यार्यैस्तन्न ग्राह्यं कथञ्चन ।
अर्कनीचोच्चमध्याख्यस्वोच्चकक्षागतं भृगोः ॥ ४९१ ॥
पञ्चलिप्ताधिकं विम्बं भवेत्तद्रीतितस्तथा ।
स्वमध्यकक्षिकासंस्थं नवलिप्तोर्ध्वगं तथा ॥ ४९२ ॥
स्वनीचकक्षिकासंस्थं भवेद्द्वित्रि ३२ कलोन्मितम् ।
रव्युच्चमध्यनीचाख्यकक्षिकास्थं कुजस्य वै ॥ ४९३ ॥
तथा विम्बं भवेन्नन्दकलोर्ध्वं स्वीयनीचगम् ।
तथैव मनुलिप्तोर्ध्वं जायते तत्कृतेर्वशात् ॥ ४९४ ॥
इनेन्दुविम्बेन समं तदर्द्धासन्नं तदङ्घ्र्यूर्ध्वगमुक्तविम्बम् ।
लोके विरुद्धं कथमादृतं तैरत्यल्पशुक्रारजदृश्यविम्बे ॥ ४९५ ॥
स्वनीचगं भृगोर्विम्बमर्कत्र्यंशोर्ध्वगं तु सत् ।
भास्करोक्तमसद्रीत्या दृग्विरोधात्तदप्यसत् ॥ ४९६ ॥
सम्यक् कृतं तैर्यवनैरपीह त्वत्तः स्फुटं योजनकर्णमानम् ।
स्वमार्गजं भिन्नमिदं तदुक्तं किमस्त्यपूर्वं तदहं न वेद्मि ॥४९७॥
इनोच्चकक्षोर्ध्वगता सदैवाधिकास्ति भौमाशुजनीचकक्षा ।
सदाधिकाल्पोर्ध्वगताधरस्थविम्बीयमूर्त्तप्रतिवृत्तयोर्हि ॥ ४९८ ॥
स्वमध्यकक्षासमयोर्यदुक्तं संमीलनं तत्र कथं चिदत्र ।
प्रत्यक्षदृष्ट्या परिवाधितत्वान्न लज्जसे त्वं यवनादपीत्थम् ॥४९९॥

कलासङ्ख्यया यद्भवेत्खेटबिम्बं
समं चाधिकं चाल्पकं स्यात्तदेव ।
नृदृष्ट्यापि नीलाम्बरे दृश्यमित्थं
न जानन्ति मूढाः स्वकुज्ञानगर्वात् ॥ ५०० ॥
रविणाल्पान्तरात्त्यक्तं तद्बीजं विधिनाहृतम् ।
यन्त्रैश्च वक्रभिस्तज्जस्फुटखेटोदितौ च यौ ॥ ५०१ ॥
दृष्टार्थं निर्णयादेशावदृष्टार्थं न तौ ह्यतः ।
अदृष्टफलसिद्ध्यर्थं निर्बीजार्कोक्तमेव हि ॥ ५०२ ॥
प्रमाणं श्रुतिवद्ग्राह्यं कर्मानुष्ठानतत्परैः ।
दृष्टयोग्यमपि त्यक्तमदृष्टार्थाप्तये क्वचित् ॥ ५०३ ॥
परात्मनान्यथोच्चकैदाम्भतोस्याल्पदृक्फलात् ।
सर्वज्ञस्यास्य तत्त्वोक्तेर्ब्रह्माप्यन्तं न यास्यति ॥ ५०४ ॥
श्रुतयोपि स्तुवन्त्येनं कालात्मानमनेकधा ।
कर्मार्हसौरकालाण्या स्वीयतत्सिद्धये श्रितौ ॥ ५०५ ॥

इति श्रीकमलाकरविरचिते सिद्धान्ततत्त्वविवेके गृहस्पष्टाधिकारः ॥

अथ त्रिप्रश्नाधिकारः ।

दिग्देशकालाः सकलोपयुक्ता विनेश्वरं यान्न विदन्ति तज्ज्ञाः ।
ज्ञातुं च तान् गोलसुद्धत्सरीत्या त्रिप्रश्नसंज्ञं गणितं प्रवच्मि ॥ १ ॥
वाधितापि परगोलजसंस्था स्वीकृता निजवृतौ समसूत्रे ।
तेन भूमिखगभानिलगोलाभैकमेव परिकल्प्य सुगोलम् ॥ २ ॥
लाघवात्तदुदरस्थितसद्धत्साङ्गेनजातगणना सुधियोह्या ।
चेत्परार्थमिह धातुमयानि वंशजान्यथ दृढानि सुधीभिः ॥ ३ ॥
मण्डलानि च सुद्धत्समशलाकासम्भवानि विरचय्य विधेयम् ।

गोलद्वयमगणितं गणितज्ञैर्गोलगर्भ इव स क्षितिगर्भः ॥ ४ ॥
तद्गोलपृष्ठे ध्रुवसंज्ञचिह्ने कार्ये स्वयाम्योत्तरदिग्गते च ।
परस्परं गोलदलान्तरत्वस्थित्याथ कार्यं ध्रुवमध्यचिह्नात् ॥ ५ ॥
वृत्तं तु यत्खाङ्कलवैर्निरक्षपूर्वापराख्यं विषुवं तदेव ।
नाद्याक्षयं तत्र च ये प्रदेशा निरक्षदेशाः किल ते प्रकल्प्याः ॥ ६ ॥
स्वदेशगं यद् ध्रुवयोर्विलग्नं तत्स्वीययाम्योत्तरवृत्तसंज्ञम् ।
लग्नं च तद्यत्र निरक्षदेशे स एव वेद्यः स्वनिरक्षदेशः ॥ ७ ॥
वृत्ते च ये स्वस्वनिरक्षदेशाभ्यां खाङ्कभागैः किल तत्कुजे ते ।
तदैक्ययुग्मं तु निरक्षवृत्तेथोन्मण्डलं यत्स्वनिरक्षभूजम् ॥ ८ ॥
व्यक्षस्वदेशक्षितिजे विभिन्ने तयोश्च याम्योत्तरवृत्तमेकम् ।
यन्मध्यतः खाङ्कलवैश्च यस्मात् सर्वत्र तद्वृत्तगदेशतोपि ॥ ९ ॥
वृत्तानि खाङ्कैर्विहितानि तानि सर्वाणि तन्मध्यगतान्यवश्यम् ।
निरक्षजा रावणराजधानी लङ्का च तद्दक्षिणसौम्यवृत्तम् ॥१०॥

रेखाभिधं तन्निजयाम्यसौम्य-
वृत्तान्तरं प्रागपरं तथान्यत् ।
याम्योत्तरं स्वस्वनिरक्षमध्ये
तिर्यक् स्वरेखास्वनिरक्षमध्ये ॥ ११ ॥
याम्योत्तरे स्वे स्वकुजं तु यत्र
लग्नं भवेत्तत्समसंज्ञचिह्नम् ।
इत्थं समाख्यद्वयतोऽपि खाङ्कै-
र्यत्प्राक्परं तत्सममण्डलं स्यात् ॥ १२ ॥

उन्मण्डलस्वक्षितिजैक्यलग्नं सदैव तत्प्राक्परदेशयोः स्यात् ।
भ्रमत्यजस्रं प्रवहभ्रमेण ध्रुवात्कदम्बः परमाऽपमांशैः ॥ १३ ॥
सौम्यध्रुवात्सौम्यकदम्बकस्तु

सव्यं द्वितीयादपसव्यमन्यः।
वृत्तं च यत्खाङ्कलवैः कदम्बा-
त्तत्क्रान्तिवृत्तं किल राशिवृत्तम् ॥ १४ ॥
तन्नाडिकावृत्तयुतिद्वयस्थौ तौ सायनौ मेषतुलादिसंज्ञौ।
पूर्वक्रमात्ते किल राशयः स्युर्यतो भषट्कं विषुवाख्यवृत्तात्॥१५॥
सौम्ये च तन्मेषमुखं भषट्कं
याम्ये यतस्तच्च तुलामुखं स्यात्।
प्रोक्तौ बुधैस्ते विषुवाभिधे य-
न्मेषादितः प्राक्त्रिगृहान्तरेऽस्ति ॥ १६ ॥
भवेच्च तत्कीटमुखं तथा यत्पश्चाच्च तन्नक्रमुखं सदैव।
ते चायने दक्षिणसौम्यसंज्ञे तयोः कदम्बद्वयसक्तवृत्तम् ॥ १७ ॥
लग्नं च तत्स्यादयनाख्यमत्र नाडीभवृत्तान्तरकं परं स्यात्।
तन्नैकरूपं प्रवदन्ति केचिन्न तन्मतं स्वार्षविरोधतः सत् ॥ १८ ॥
नाडीभवृत्तसम्पातात् खाङ्कैर्वायनमण्डलम्।
पृष्ठाख्यकेन्द्रयोस्तत्तु विलग्नं नियतं तयोः ॥ १९ ॥
त्रिराशिद्युज्यकाचापांशैर्वा तत्प्रतिभागजैः।
ध्रुवाभ्यां यानि वृत्तानि स्वाहोरात्राभिधानि च ॥ २० ॥
ध्रुवोत्थद्वचगस्वस्वापमेनान्तरितानि च।
एवं समाख्यचिह्नाद्यत्तद्भवेदुपवृत्तकम् ॥ २१ ॥
समाख्यमण्डलात्स्वस्वभुजांशान्तरितं च तत्।
तत्र यत् खेटसम्बन्धात्तच्च खेटोपवृत्तकम् ॥ २२ ॥
यच्चाग्राग्रकसम्बन्धात्तदग्राग्रोपवृत्तकम्।
ये खेटसमचिह्नस्थवलये सममण्डलात् ॥ २३ ॥
शङ्कोपवृत्तावधिका भुजसंज्ञांशकास्तथा।

अग्रोपवृत्तावधिका ये च तेऽग्रांशकाः सदा ॥ २४ ॥
ग्रहाग्रकोपवृत्तान्तस्तैवं शङ्कुतलांशकाः ।
इत्थं समग्रहाग्राख्यमण्डलैरुदितं बुधैः ॥ २५ ॥
एवं खमध्यखेटस्थोपरिगं तद्भवेदिह ।
दृङ्मण्डलं तच्च चलं भग्रहानुगतं सदा ॥ २६ ॥
यद्गर्भभूजे परिकल्प्य केन्द्रं ग्रहस्थगं खाङ्कलवैस्तु वृत्तम् ।
दृङ्मण्डलं तत्प्रवदन्ति यद्वत्समाख्ययाम्योत्तरकोणगानि ॥ २७ ॥
नतोन्नताख्यं च तदेव वृत्त-
मित्थं च वृत्तानि बहूनि गोले ।
प्रयोजनं यस्य च तत्प्रवच्ये
स्वस्वाधिकारे खलु युक्तियुक्तम् ॥ २८ ॥
यद्गोलगर्भात्किल गोलमध्यव्यासार्द्धमानेन कृतं सुवृत्तम् ।
तद्गोलपृष्ठार्द्धभवं च तस्मिन् वृत्तस्य मध्यं परिकल्प्य खाङ्कैः ॥ २९ ॥
यद्गोलपृष्ठार्द्धभवं च वृत्तं ततश्च तत्स्यान्नियमेन तिर्यक् ।
ध्रुवद्वयस्थं विषुवाख्यवृत्ताद्यथा यथा वा सममण्डलाच्च ॥ ३० ॥
वृत्तं समाख्यद्वयचिह्नसक्तं यथा कदम्बद्वयगं भवृत्तात् ।
तिर्यग्गतं यच्च यतो भवेत्तद्वृत्ताच्च तत्स्यान्नियमेन तिर्यक् ॥ ३१ ॥
यन्निज्यावृत्ततस्तिर्यक्स्थितन्निज्योत्थवृत्तयोः ।
यत्रैक्यं तत्र तस्यास्ति नियतं पृष्ठकेन्द्रकम् ॥ ३२ ॥
पृष्ठार्द्धवृत्तद्वयमस्ति गोले भिन्नं तदैक्यद्वयमस्त्यवश्यम् ।
षड्भान्तरस्थं च तयोश्च ताभ्यां त्रिभेन्तरे स्यात्परमान्तरं हि ॥ ३३ ॥
परापमांशाश्च यथा भवृत्तनाड्याख्यवृत्तान्तरगा यथा वा ।
ध्रुवद्वयस्थं च कदम्बयुग्मस्थितं तयोश्चापि परापमांशाः ॥ ३४ ॥
समाख्यनाडीवलयान्तराले यथाक्षसंज्ञाश्च तथैव वेद्याः ।

उन्मण्डलक्ष्मावलयान्तरे स्यादेवं द्वयोस्तद्वदुभयत्र गोले ॥३५॥

स्वीये दिनार्द्धे चलसंस्कृतोऽर्कः
स्फुटस्तुलाजादिगतो यदा स्यात् ।
तदा रवेर्ये नतभागकास्ते
पलांशका वा ध्रुवजोन्नतांशाः ॥ ३६ ॥

अर्कोन्नतांशा ध्रुवजा नतांशा वा लम्बभागा यमसौम्यवृत्ते ।
नाडयाक्षयादुत्तरयाम्यभागौ गोलस्य तावुत्तरयाम्यगोलौ ॥३७॥

मृगाननात्संचलनं भषट्कं यावद्रवेरुत्तरदिक्प्रतिष्ठम् ।
कीटादितस्तद्गृहषट्कमेवं दृष्टं च तद्दक्षिणदिक् च तेन ॥३८॥

ते सौम्ययाम्यायनसंज्ञके स-
स्तथा झषात्षट्ऋतवो वसन्तात् ।
तद्गोलपृष्ठार्द्धवृतौ हि चक्र-
लिप्ता२१६००स्तु तद्व्यासदलं त्रिभज्या ॥ ३९ ॥

उन्नाडिकाक्ष्मासममण्डलानां
योगो द्विधा प्राक्परतश्च सोयम् ।
तत्स्वस्तिकाख्यश्च तथा खमध्यं
तत्स्वस्तिकं चोर्ध्वगमित्यधोपि ॥ ४० ॥

विनोर्ध्वाश्रयमन्योस्ति नाश्रयो लम्ब एव सः ।
भूपृष्ठे यत्र संस्पृष्टस्तत् पृष्ठं स्वस्य तत्स्थले ॥ ४१ ॥

कुगर्भात्स्वीयपृष्ठस्पृक् वृत्तं यत्राम्बरे स्पृशेत् ।
खमध्यस्तत्र विज्ञेयस्तस्माद्दृङ्मण्डले स्वके ॥ ४२ ॥

नतांशका ये खचरस्य नूनं
ते दृग्ज्यकाचापभवास्तथात्र ।
ये चोन्नतास्ते किल शङ्कुचाप-

भवास्तु गर्भक्षितिजाच्च वेद्याः ॥ ४३ ॥

दृग्गोलकस्यास्ति यदूर्ध्वखण्डं सदैव गर्भक्षितिजोर्ध्वगं तत् ।

भूपृष्ठचिह्नं किल दृष्टिचिह्नं येषां च तेषां क्षितिजं सदैव ॥ ४४ ॥

कुगर्भभूजात्कुदलान्तरेण

समं ततोऽस्तीति सतां प्रसिद्धम् ।

तदूर्ध्वगं यत् किल तच्च तेषां

दृश्यं न चान्यत्क्षितिगर्भभूजात् ॥ ४५ ॥

अतश्च ये स्युर्ग्रहजोन्नतांशाः

कुच्छन्नसंज्ञांशविहीनितास्ते ।

कार्याश्च पृष्ठक्षितिजाच्च ते स्यु-

र्ग्रहोन्नतांशाः क्षितिपृष्ठगानाम् ॥ ४६ ॥

त्रिज्या कुखण्डेन गुणोद्धृता यत्कर्णेन कुच्छन्नगुणः स तस्य ।

चापं तु कुच्छन्नमितिः खगर्भपृष्ठान्तरे दृग्वृतिजा लवास्ते ॥४७॥

द्युज्यागुणाऽऽप्ता त्रिगुणेन कक्षा

स्पष्टा तथा सङ्गुणितं सुखार्थम् ।

गजाष्टनेत्रै २८८ रयुतं १०००० पलानि

प्रत्यग्भ्रमाद्गर्भकुजात्खभूजम् ॥ ४८ ॥

गतिर्लिप्तानवत्यंशोऽथवा स्थूलं पलात्मकम् ।

गर्भभूजात्पृष्ठभूजं तैर्ग्रहोस्त्यनिलभ्रमात् ॥ ४९ ॥

मिथस्तिर्यक्स्थयोरैक्याच्चतुर्दिक्षु स्थितास्च ये ।

समसंज्ञास्च ते कोणास्तद्भिन्ना विषमाभिधाः ॥ ५० ॥

त्रिज्यावृत्तत्रयोत्पन्नं यस्य कोणत्रयं भवेत् ।

विषमं त्रिभुजं तत्स्यात् त्रिज्यावृत्तचतुष्टयात् ॥ ५१ ॥

चापरूपभुजैस्तत्स्याच्चतुर्भिस्चतुरस्रकम् ।

विषमं विषमाभ्यां तत्कर्णाभ्यां समतः समम् ॥ ५२ ॥
यत्कोणयुग्मं विषमं समस्त्वेकोस्ति तद्भवेत् ।
त्रिज्यावृत्तत्रयोत्पन्नं त्रिकोणं जात्यसंज्ञकम् ॥ ५३ ॥
समकोणाश्रितौ यस्य भुजौ चापात्मकौ तयोः ।
मध्ये चापात्मकः कर्णश्चापजात्यमतस्य तत् ॥ ५४ ॥
गोले चापक्षेत्रजाता सुयुक्तिः क्रान्तिक्षेत्रोक्तप्रकारस्य रीत्या ।
तावत्तेनासंशयं क्रान्तिजातक्षेत्रक्षेत्रादुत्थितां तां वदामि॥५५॥
यत्स्यान्नाडीक्रान्तिवृत्तैक्यचिन्ह-
मूर्ध्वं कृत्वा गोलमध्यं प्रकल्प्य ।
तद्गोलस्याधःस्थितं यच्च खण्डं
छित्वा त्यक्त्वा चोर्ध्वखण्डं समायाम् ॥ ५६ ॥
भूमौ स्थाप्यं येन तच्चायनाख्यं
भूमिस्थं स्याद्वृत्तमस्यास्ति केन्द्रम् ।
तस्यादाद्यं भूस्थितं यत्ततोस्ति
मध्यं यावत्तूर्ध्वगं मध्यसूत्रम् ॥ ५७ ॥
याम्योत्तरौ स्वायनवृत्तलग्नौ ध्रुवौ तयोर्मध्यविलग्नवृत्तम् ।
याम्योत्तरं प्रागपरं च नाड्याह्वयं भवृत्तं किल तत्र तिर्यक् ॥५८॥
मध्याह्नवृत्ते खचरावधि स्यु-
र्भुजांशकाः कोटिलवाः कुतश्च ।
मध्याच्च गोलांघ्रिसमानि तानि
दृश्यानि वृत्तानि भुवं तु यावत् ॥ ५९ ॥
खेटोपरिस्थं ध्रुवयोर्विलग्नं
तदिष्टसंज्ञं त्वथ तद्ध्रुवाच्च ।
द्युज्यांशकैर्यत्खचरावधि स्या-

वृत्तं खगस्य द्युनिशाभिधं तत् ॥ ६० ॥
तथैव मध्याद्भुजभागकैस्च वृत्तं कृतं तत्तु भुजांशवृत्तम् ।
नाड्याहृयाच्चोभयतस्तदिष्टवृत्तैक्ययुग्मं तु समान्तरेऽस्ति ॥ ६१ ॥
तदैक्यवद्धं किल यच्च तत्स्यात्पूर्णज्यकासूत्रमथाद्यकेन्द्रात् ।
तन्मध्यसूत्रे खगकोटिजीवान्तरे द्वितीयं किल केन्द्रमूह्यम् ॥ ६२ ॥
तत्केन्द्रतः क्रान्तिवृतौ खगेद्रं यावद्भुजज्या विषुवेऽपि वृत्ते ।
भुजांशवृत्तावधि सैव दोर्ज्या तद्वृत्तमध्यस्थितसूत्ररूपा ॥ ६३ ॥
नाड्याहृये तद्विषुवाङ्कचिह्नं यत्रेष्टवृत्तं युतमाद्यकेन्द्रात् ।
तच्चिह्नगं त्विष्टवृतिस्थमध्यसूत्रं तयोर्योग इहास्यतथ्यम् ॥ ६४ ॥
पूर्णज्यकासूत्रदलेऽथ तेन सैवेष्टवृत्ते च भुजोत्थवृत्ते ।
क्रान्त्यंशकानामथ तद्गतानां ज्या खेटनाडीवलयान्तरे स्यात् ॥ ६५ ॥
आद्यकेन्द्राच्च तद्योगावधि द्युज्या ग्रहावधि ।
त्रिज्या तौ कोटिकर्णौ स्तो बाहुः क्रान्तिज्यका तयोः ॥ ६६ ॥
आद्यकेन्द्रात्तथा भूमौ सूत्रे नाडीभवृत्तगे ।
तयोरायनवृत्तान्तः परक्रान्त्यंशकाः किल ॥ ६७ ॥
तेषां ज्या नाडिका सूत्रात्तिर्यक्स्था भभवृत्तगा ।
आद्यकेन्द्रात्तथा कार्यं भुजजीवोत्थमण्डलम् ॥ ६८ ॥
त्रिज्याकर्णे परक्रान्तिज्यका दोर्ज्याश्रुतौ च का ।
अनुपाताद्भुजज्योत्थवृतौ दोर्ज्यापमज्यका ॥ ६९ ॥
चलांशसंस्कृतात्खेटाद्दोर्ज्योत्थेष्टापमज्यया ।
गुणिता त्रिगुणाप्ता स्याच्चापमिष्टापमस्ततः ॥ ७० ॥
चलसंस्कृतखेटस्य गोलदिक् स भवेदिह ।
अतो ज्ञेया परक्रान्तिर्विलोमगणिताद्बुधैः ॥ ७१ ॥
अथ याम्योत्तरे सूत्रेऽपमज्यां चाद्यकेन्द्रतः ।

दत्वा केन्द्रमहोरात्रवृत्तस्यात्र प्रकल्पयेत् ॥ ७२ ॥
यत्केन्द्रात्सौम्ययाम्यस्थवृत्ताहोरात्रदेशगम् ।
वृत्तं द्युज्या च तन्मध्यसूत्रात्तिर्यग्ग्रहावधि ॥ ७३ ॥
वृत्तं स्यात्खेटसम्बन्धिव्यस्तोदयलवज्यका ।
क्रान्तिज्यादोर्ज्यकावर्गान्तरमूलसमैव या ॥ ७४ ॥
सैवाद्यकेन्द्रविषुवांशकवृत्ते युतिस्थले ।
द्युज्याग्रे मध्यसूत्राच्च तिर्यक्स्था जायते ध्रुवम् ॥ ७५ ॥
त्रिज्याग्रे विषुवांशानां ज्या स्यात्तदनुपाततः ।
तच्चापं विषुवांशाः स्युस्तत्कला द्युनिशोऽसवः ॥ ७६ ॥
अथान्यरीत्या विषुवांशकानां ज्ञानप्रकारा बहवो बुधानाम ।
ध्रुवं खमध्यं परिकल्प्य यच्च याम्योत्तरं तद्विषुवाख्यवृत्तम् ॥७७॥
वृत्तं यदिष्टं किल तद्भवृत्तं यन्नाडिकाख्यं तदिहायनाख्यम् ।
भूनाडिकैक्यं ध्रुवकं ततो यद्ग्रहोपरिस्थं च तदिष्टवृत्तम् ॥ ७८ ॥
यत्स्याद्ग्रहस्य द्युनिशाख्यवृत्तं भुजांशवृत्तं किल तद्ध्रुवात्स्यात् ।
ध्रुवाद्भवृत्ते खचरावधि स्युर्द्युज्यांशकास्ते किल तद्भुजांशाः ॥७९॥
परापमांशा विषुवांशका ये
तथापमांशा अपि ते प्रकल्प्याः ।
प्रकल्पितेष्टाख्यवृतौ तु ये स्यु-
र्दोः क्रान्तिजीवाक्षतिभेदमूलात् ॥ ८० ॥
चापांशकास्तत्र परापमांशाः स्वेष्टापमास्ते विषुवांशकाः स्युः ।
यद्वायनाख्यं विषुवाभिधं स्याद्वृत्तं भवृत्तं तु यदिष्टवृत्तम् ॥८१॥
यद्गोलमध्यं किल तद्ध्रुवाख्यमित्थं मिथो गोलविदा प्रकल्प्यम् ।
परापमः स्याद्विषुवांशकोटिरिष्टापमः स्याद्ग्रहजा च कोटिः ॥८२॥
अत्रापि साध्या विषुवांशकास्ते स्वेष्टापमात्तत्परमापमोत्थ्या ।

जातांशकैर्वा नखनन्दभागा ये चान्यथा ते विषुवांशकाः स्युः ॥८३॥
भमण्डलं चापममण्डलं तद्यच्चायनाख्यं त्वयनाख्यमेव ।
यद्याम्यसौम्यं वलयं च नाड्याह्वयं त्रिराशिद्युगुणोत्थचापम् ॥८४॥
परापमो भूविषुवाख्ययोग-
ध्रुवोऽङ्कवेष्टाख्यवृत्तावभीष्टा ।
क्रान्तिस्तथा खेटभुजांशकास्ते
भुजांशका मध्य इहास्ति मध्यः ॥ ८५ ॥
परापमात्स्वज्ञनितो भुजाग्रे खेटापमोऽतोऽत्र स एव चोक्तः ।
परापमानां विषुवांशकानामपि द्युजीवांशगतो ध्रुवात्प्राक् ॥८६॥
अत्रैकपूर्णापमजापमाच्च विलोमतोऽन्यः परमापमः स्यात् ।
अतो बुधानां विषुवांशकानां ज्ञानं सुबोधं गणितप्रकारैः ॥८७॥
इष्टापमज्याकृतिवर्जिताया दोर्ज्याकृतेर्मूलमवाप्यते तत् ।
त्रिभज्यकाघ्नं द्युगुणेन भक्तं लब्धस्य चापं विषुवांशकाः स्युः ॥८८॥
ग्रहस्य कोटिज्यकया विनिघ्नी त्रिज्या हृता द्युज्यकयाप्तचापम् ।
लवादिकं तद्वियुताश्च खाङ्का ज्ञेया बुधेन्द्रैर्विषुवांशकास्ते ॥८९॥
त्रिभद्युमौर्व्या गुणिता द्युमौर्व्योद्धृता भुजज्याप्तफलस्य चापम् ।
ते वा भवेयुर्विषुवांशकाश्चेच्चलग्रहोऽत्राद्यपदस्थितोऽथ ॥ ९० ॥
द्वितीयपादे तु तदूनखाष्टेन्दवस्तृतीये खगजेन्दुयुक्ताः ।
पदे चतुर्थे खरसाग्निशुद्धा अजाख्यतद्गोलजसन्मिताः स्युः ॥९१॥
ज्ञाता यदा ते विषुवांशकास्तदग्राद्ग्रहांशाः कति तत्प्रकारम् ।
विलोमरीत्या कथयात्र सूक्ष्मं यद्यस्ति गोले पटुताभिमानः ॥९२॥
या वाङ्कजीवा विषुवांशकानां स्वकोटिजातद्युगुणेन भक्ता ।
त्रिज्यागुणा लब्धफलस्य चापं चलग्रहांशाः प्रथमे पदे स्युः ॥९३॥
पदे द्वितीयेऽथ तदूनखाष्टे-

## ॥ सायनग्रहराश्यंशेभ्यो विषुवांशज्ञानार्थं सारणी ॥

| भागाः | ० मे | वृ १ | मि २ | क ३ | सिं ४ | क ५ |
|---|---|---|---|---|---|---|
| ० | ० ० ० | २७ ५३ ५६ | ५७ ४८ २१ | ९० ० ० | २ ११ ३८ | २ ६ ४ |
| १ | ० ५५ १ | २८ ५१ १८ | ५८ ५० ५५ | ९१ ५ २६ | ३ १४ २ | ३ ३ १८ |
| २ | १ ५० ३ | २९ ४८ ४९ | ५९ ५३ ३९ | ९२ १० ५१ | ४ १६ १५ | ४ ० २३ |
| ३ | २ ४५ ० | ३० ४६ २९ | ६० ५६ ३२ | ९३ १६ १५ | ५ १८ १७ | ४ ५७ २० |
| ४ | ३ ४० ८ | ३१ ४४ ४९ | ६१ ५९ ३५ | ९४ २१ ३८ | ६ २० ९ | ५ ५४ १० |
| ५ | ४ ३५ २० | ३२ ४२ १७ | ६३ २ ४८ | ९५ २६ ५९ | ७ २१ ५० | ६ ५० ५१ |
| ६ | ५ ३० १९ | ३३ ४० २६ | ६४ ६ १० | ९६ ३२ १८ | ८ २३ २१ | ७ ४७ २८ |
| ७ | ६ २५ २७ | ३४ ३८ ४४ | ६५ ९ ४१ | ९७ ३७ ३४ | ९ २४ ४० | ८ ४३ ५२ |
| ८ | ७ २० ३७ | ३५ ३७ १२ | ६६ १३ २१ | ९८ ४२ ४७ | १३० २५ ४२ | ९ ४० १२ |
| ९ | ८ १५ ५० | ३६ ३५ ५० | ६७ १७ ९ | ९९ ४७ ५७ | १ २६ ४६ | १६० ३६ २६ |
| १० | ९ ११ ६ | ३७ ३४ ३९ | ६८ २१ ६ | १०० ५३ २ | २ २७ ३३ | १ ३२ ३३ |
| ११ | १० ६ २५ | ३८ ३३ ३७ | ६९ २५ ११ | १ ५८ ४ | ३ २८ ९ | २ २८ ३४ |
| १२ | ११ १ ४७ | ३९ ३४ ४६ | ७० २९ २३ | ३ ३ ० | ४ २८ ३३ | ३ २४ १३ |
| १३ | ११ ५७ १३ | ४० ३२ ६ | ७१ ३३ ४३ | ४ ७ ५१ | ५ २८ ४७ | ४ २० ३४ |
| १४ | १२ ५४ ४३ | ४१ ३१ ३६ | ७२ ३८ १० | ५ १२ ३७ | ६ २८ ५० | ५ १७ ३ |
| १५ | १३ ४८ १८ | ४२ ३१ १८ | ७३ ४२ ४३ | ६ १७ १७ | ७ २८ ४४ | ६ ११ ४२ |
| १६ | १४ ४३ ५७ | ४३ ३१ १० | ७४ ४७ २४ | ७ २१ ५९ | ८ २८ २३ | ७ ७ १६ |
| १७ | १५ ३९ ४२ | ४४ ३१ १२ | ७५ ५२ ८ | ८ २६ ७ | ९ २७ ५३ | ८ २ ४६ |
| १८ | १६ ३५ ३१ | ४५ ३१ २६ | ७६ ५६ ५९ | ९ ३० ३६ | १४० २७ १३ | ८ ५८ १३ |
| १९ | १७ ३१ २६ | ४६ ३१ ५१ | ७८ १ ५६ | ११० ३४ ४९ | १ २६ २२ | ९ ५३ ३५ |
| २० | १८ २७ २१ | ४७ ३२ २६ | ७९ ६ ५७ | १ ३८ ५४ | २ २५ २१ | १७० ४९ २४ |
| २१ | १९ २३ ३४ | ४८ ३३ १३ | ८० १२ ३ | २ ४२ ५० | ३ २४ ९ | १ ४४ ९ |
| २२ | २० १९ ४७ | ४९ ३४ ११ | ८१ १७ १२ | ३ ४६ ३९ | ४ २२ ४८ | २ ३९ २४ |
| २३ | २१ १६ ७ | ५० ३५ १९ | ८२ २२ २५ | ४ ५० १९ | ५ २० १६ | ३ ३४ ३४ |
| २४ | २२ १२ ३० | ५१ ३६ ३९ | ८३ २७ ४२ | ५ ५३ ५९ | ६ १९ ३४ | ४ २९ ४१ |
| २५ | २३ ९ ८ | ५२ ३९ ९ | ८४ ३३ ० | ६ ५७ १२ | ७ १७ ४२ | ५ २४ ४७ |
| २६ | २४ ५ ५० | ५३ ३९ ५१ | ८५ ३८ २१ | ८ ० २४ | ८ १५ ४१ | ६ १९ ५१ |
| २७ | २५ २ ३९ | ५४ ४१ ४२ | ८६ ४३ ४५ | ९ ३ २८ | ९ २० ३० | ७ १४ ५५ |
| २८ | २५ ५९ ३६ | ५५ ४३ ४५ | ८७ ४९ ९ | १२० ६ २१ | १५० ११ १० | ८ ९ ५७ |
| २९ | २६ ५६ ४२ | ५६ ४५ ५८ | ८८ ५४ ३४ | १ ९ ५ | १ ८ ४२ | ९ ४ ५८ |

## ॥ सायनग्रहराश्यंशेभ्यो विषुवांशज्ञानार्थं सारणी ॥

| भागाः | ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | २७ | २८ | २९ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| तु ६ | १८० | १८० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १९० | १ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | २०० | १ | २ | ३ | ४ | ५ | ५ | ६ |
| | ० | ५५ | ५० | ४५ | ४० | ३५ | ३० | २५ | २० | १५ | ११ | ६ | १ | ५७ | ५४ | ४८ | ४५ | ३९ | ३५ | ३१ | २७ | २३ | १९ | १६ | १२ | ९ | ५ | २ | ५९ | ५६ |
| | ० | १ | ३ | ५ | ८ | २० | १९ | २७ | ३७ | ५० | ६ | २५ | ४७ | १३ | ४३ | १८ | ४७ | ४२ | ३१ | २६ | २७ | ३४ | ४७ | ७ | ३० | ८ | ५० | ३९ | ३६ | ४२ |
| वृ ७ | ७ | ८ | ९ | २१० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | २२० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | २३० | १ | २ | ३ | ४ | ५ | ६ |
| | ५३ | ५१ | ४८ | ४६ | ४४ | ४२ | ४० | ३८ | ३७ | ३५ | ३४ | ३३ | ३२ | ३२ | ३१ | ३१ | ३१ | ३१ | ३१ | ३१ | ३२ | ३३ | ३४ | ३५ | ३६ | ३८ | ३९ | ४१ | ४३ | ४५ |
| | ५५ | १८ | ४२ | २९ | ४९ | १७ | २६ | ४४ | १२ | ५० | ३९ | ३७ | ४६ | २ | ३६ | १८ | १० | १२ | २६ | ५१ | २६ | १३ | ११ | १९ | ३९ | ९ | ५१ | ४२ | ४५ | ५८ |
| ध ८ | ७ | ८ | ९ | २४० | १ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | २५० | १ | २ | ३ | ४ | ५ | ६ | ८ | ९ | २६० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
| | ४८ | ५० | ५३ | ५६ | ५९ | २ | ६ | ९ | १३ | १७ | २१ | २५ | २९ | ३३ | ३८ | ४२ | ४७ | ५२ | ५६ | १ | ६ | १२ | १७ | २२ | २७ | ३३ | ३८ | ४३ | ४९ | ५४ |
| | २१ | ५५ | ३९ | ३२ | ३५ | ४८ | १० | ४१ | २१ | ९ | ६ | ११ | २३ | ४३ | १० | ४३ | २४ | ८ | ५९ | ५६ | ५७ | ३ | १२ | २५ | ४२ | ०० | ११ | ४५ | ९ | ३४ |
| म ९ | २७० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | २८० | १ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | २९० | १ | २ | ३ | ४ | ५ | ६ | ८ | ९ | ३०० | १ |
| | ० | ५ | १० | १६ | २१ | २६ | ३२ | ३७ | ४२ | ४७ | ५३ | ५८ | ३ | ७ | १२ | १७ | २१ | २६ | ३० | ३४ | ३८ | ४२ | ४६ | ५० | ५३ | ५७ | ० | ३ | ६ | ९ |
| | ० | २६ | ५१ | १५ | ३८ | ५९ | १८ | ३४ | ३७ | ५७ | २ | ४ | ० | ५१ | ३७ | १७ | ५० | १७ | ३६ | ४९ | ५४ | ५० | ३९ | १९ | ५० | १२ | २४ | २८ | २१ | ५ |
| कुं १० | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | ३१० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | ३२० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | ३३० | १ |
| | ११ | १४ | १६ | १८ | २० | २१ | २३ | २४ | २५ | २६ | २७ | २८ | २८ | २८ | २८ | २८ | २८ | २७ | २७ | २६ | २५ | २४ | २२ | २० | १९ | १७ | १५ | २० | ११ | ८ |
| | ३८ | २ | १५ | १७ | ९ | ५० | २० | ४० | ४९ | ४६ | ३३ | ९ | ३३ | ४७ | ५० | ४४ | २३ | ५३ | १३ | २२ | २१ | ९ | ४८ | १६ | ३४ | ४२ | ४१ | ३० | १० | ४२ |
| मी ११ | २ | ३ | ४ | ४ | ५ | ६ | ७ | ८ | ९ | ३४० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ८ | ९ | ३५० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ३५९ |
| | ६ | ३ | ० | ५७ | ५४ | ५० | ४७ | ४३ | ४० | ३६ | ३२ | २८ | २४ | २० | १७ | ११ | ७ | २ | ५८ | ५३ | ४९ | ४४ | ३९ | ३४ | २९ | २४ | १९ | १४ | ९ | ४ |
| | ४ | १८ | २३ | २० | १० | ११ | २८ | ५२ | १२ | २६ | ३३ | ३४ | १२ | ३४ | ३ | ४२ | १६ | ४६ | १३ | ३५ | २४ | ९ | २४ | ३४ | ४१ | ४७ | ५१ | ५५ | ५७ | ५८ |

न्द्वयस्तृतीये खगजेन्दुयुक्ताः ।
अन्त्ये तदूनाः खरसाग्नयस्ते
खरामभक्ता गृहपूर्वकः स्यात् ॥ ९४ ॥
अत्रोपपत्तिर्विषुवत्क्रान्तिवृत्तैक्यदेशतः ।
क्रान्तिवृत्ते ग्रहो यत्र तत्र ध्रुवकदम्बयोः ॥ ९५ ॥
सूत्रे ये भवतस्तत्र ध्रुवसूत्रेऽन्तरं तयोः ।
क्रान्तिनाड्याख्ययोराद्या क्रान्तिरन्या तदन्तरे ॥ ९६ ॥
क्रान्तिः कदम्बसूत्रे स्यात्तयोर्भेदः पदान्तरे ।
पदस्यादौ पदस्यान्ते त्वभेदोऽस्ति तयोरिह ॥ ९७ ॥
ग्रहोदयास्ताधिकारे ज्ञेया तद्वासना बुधैः ।
अथ नाम्ना विभेदोऽस्ति विषुवत्क्रान्तिवृत्तयोः ॥ ९८ ॥
नैव स्वरूपतस्तेन नाड्याख्ये विषुवांशतः ।
तिर्यक्ध्रुवाख्यसूत्रस्थो भवृत्तावधिकोपमः ॥ ९९ ॥
आद्यसंज्ञः स एवात्र भवृत्ते विषुवांशतः ।
तिर्यक्कदम्बसूत्रस्थोपमोऽन्यो नाडिकावधि ॥ १०० ॥
ग्रहस्यांशवशात्तेन यो भवेत्प्रथमापमः ।
स एव विषुवांशानामपमोऽन्यो भवेद् ध्रुवम् ॥ १०१ ॥
तद्वशात्क्षेत्रजांशा ये विषुवद्वृत्तगाश्च ते ।
क्रान्तिवृत्तस्थिता वेद्या गोलतत्त्वं विजानता ॥ १०२ ॥
परापमज्यया निघ्नी त्रिज्याप्ता विषुवांशजा ।
जीवा सा विषुवांशानां कोट्यंशद्युज्ययोद्धृता ॥ १०३ ॥
त्रिज्याघ्नी च परक्रान्तिज्यया भक्ता च सा पुनः ।
त्रिज्यागुणाथ परमापमत्रिगृहजीवयोः ॥ १०४ ॥
गुणहारकयोः साम्यान्नाशे संविहिते सति ।

यथोक्तं सर्वमुत्पन्नं विषुवांशपदक्रमात् ॥ १०५ ॥

तिर्यक्स्थित्या यन्मिथोऽस्ति त्रिभज्या-

व्यासार्द्धोत्थं वृत्तयुग्मं तदैक्यात् ।

तद्वृत्तस्थावेव यौ चापरूपौ

बाहुकर्णौ यस्तयोर्मध्यसंस्थः ॥ १०६ ॥

तदन्त्रिज्यावृत्तगस्तच्च जात्यं

त्रिज्यावृत्तैः स्यात्त्रिभिः खे खगोले ।

तच्चापांशैरर्द्धपूर्णज्यकाभि-

र्वा नैतत्स्याद्यदृजुक्षेत्रजात्यम् ॥ १०७ ॥

किं तु प्रत्यक्षं भवेत्तत्त्रिकोणं नो तद्रीत्यातोऽत्र सिद्धिः कथं चित् ।

पूर्णज्याभिर्ये वदन्त्यल्पबुद्ध्या जात्यक्षेत्रं तन्मतं सन्मतं नो ॥१०८॥

सूक्ष्मत्वेनातोऽन्यथैवास्य सिद्धि-

स्तद्वत्क्रान्तिक्षेत्ररीत्या प्रवच्मि ।

चापक्षेत्रे या श्रुतिः खेटबाहु-

र्बाहुकोरेकस्याऽपमो वैषुवाख्यः ॥ १०९ ॥

अन्यस्त्वेत्थं कल्पयित्वेप्सितं य-

द्गोलज्ञैस्तद्विचार्यं स्वबुद्ध्या ।

अत्र ज्ञाते चापबाहुश्रुती ये

तज्ज्याकृत्योरन्तराद्यत्पदं तत् ॥ ११० ॥

त्रिज्यानिघ्नं ज्ञातकोटिज्ययाप्तं

तच्चापं स्यान्मानमज्ञातबाह्वोः ।

यद्वा कर्णोत्थात्र या कोटिजीवा

त्रिज्यानिघ्नी ज्ञातकोटिज्ययाप्ता ॥ १११ ॥

तच्चापांशैर्हनखाङ्कैः समं स्या-

दज्ञातस्य व्यक्तमानं हि वाह्वोः ।
नोक्तं साम्ये ज्ञातदोःकर्णयोस्त-
न्न्यूनत्वे चाज्ञातवाह्वोरिहेदम् ॥ ११२ ॥
एवं ज्ञातौ यौ च वाहू तयोर्या
जीवैकस्यान्यस्य कोटिज्ययाघ्नी ।
त्रिज्याभक्ताऽस्यास्तथान्याख्यवाह्वो-
र्ज्यौया यत्स्याद्वर्गयोगस्य मूलम् ॥ ११३ ॥
तच्चापं चाज्ञातकर्णस्य मान-
मत्र व्यक्तं जायते तद्विलोमात् ।
यद्वा कोटिज्यैकवाह्वोस्तदन्य-
कोटिज्याघ्नी त्रिज्ययाप्ता फलं यत् ॥ ११४ ॥
तच्चापांशैर्हूनखाङ्कैर्मितं स्यादज्ञातायास्तच्छ्रुतेर्मानमत्र ।
क्रान्तिस्त्रेत्रोक्तान्यभेदैरपीह ज्ञेयास्त्वान्ये तत्प्रकारप्रभेदाः ॥११५॥
गोलेथ चापकर्णाद्यै पार्श्वयोश्चापजात्यके ।
तदग्राच्चतुरस्रं तु दृश्यते यद्विदाम्बर ॥ ११६ ॥
तस्य कर्णाग्रसक्तैकः कोणः स विषमाभिधः ।
समं तु कोणत्रितयं विषमाभिधकोणतः ॥ ११७ ॥
पार्श्वयोर्यौ भुजौ तौ तु विषमौ समकोणतः ।
कर्णाग्रसक्तात्पार्श्वस्थौ भुजौ तौ स्तस्समाभिधौ ॥ ११८ ॥
यत्पार्श्वसमवाहुज्याकृतिकर्णज्यकाकृतेः ।
विशोध्य मूलं तच्चापं नियतं चान्यपार्श्वगः ॥ ११९ ॥
भवेत्स विषमो वाहुरेवं यद्विषमो भुजः ।
ज्ञातस्तज्ज्या त्रिभज्याघ्नी भक्तान्यविषमाख्यया ॥ १२० ॥
कोटिमौर्व्याथ तच्चापमन्यपार्श्वसमो भुजः ।

सदेत्थं गणितं प्राज्ञैर्ज्ञेयमेताहशस्थले ॥ १२१ ॥
ध्रुवमध्याद्बृहद्वृत्तं विषुवन्मण्डलाभिधम् ।
तथाहोरात्रवृत्तानि लघुवृत्तानि सन्ति वै ॥ १२२ ॥
मानभेदेपि तद्भांशसंख्या तुल्यैव वृत्तयोः ।
विषुवे विषुवांशा ये मध्ये स्युर्ध्रुवसूत्रयोः ॥ १२३ ॥
स्वाहोरात्राख्यवृत्तेपि तन्मिता एव चांशकाः ।
असवस्तत्कलाः प्रोक्ताः कालज्ञानप्रसिद्धये ॥ १२४ ॥
उदयादुदयं यावत्स्थिरर्क्षस्य भवेद्दिनम् ।
त्रिज्यया विषुवद्वृत्तं द्युज्यया द्युनिशाभिधम् ॥ १२५ ॥
द्युज्यायां त्रिज्यका चेत् स्याद्भांशाः स्युर्द्युज्यकावृतौ ।
क्षेत्रं तदेव विज्ञेयं यत्र द्वादश राशयः ॥ १२६ ॥
स्थिरमेषादितः खेटसम्बन्धिध्रुवहृत्त्रगाः ।
क्षेत्रांशास्तत्र विज्ञेया विषुवे विषुवांशकाः ॥ १२७ ॥

अथ निरक्षे स्थिरमेषादितो राशीनां क्षेत्रांशेभ्यस्तदुदयकालांशज्ञानम् ॥

उन्मण्डले मेषमुखोदयाद्यत्क्षेत्रांशका यान्त्युदयं च येन ।
कालेन ते व्यक्षसमुद्गमांशाः कलास्र तत्रासव एव बोध्याः ॥ १२८ ॥
भमण्डलेजादिगृहत्रयस्य
क्षेत्रांशका ये प्रतिभागजाताः ।
तेषां यथोक्त्या विषुवांशका ये
ते चोदयांशाः स्वनिरक्षदेशे ॥ १२९ ॥
पूर्वानितं यद्विहितं तदत्र तत्केवलस्योदयकालमानम् ।
एवं च यन्मेषगृहत्रयं तद्विलोमतः कीटगृहत्रयं स्यात् ॥ १३० ॥
इत्थं च मेषात्किलराशिषट्कं यत्तद्विलोमेन तुलादिषट्कम् ।

पलप्रभा संगुणितापमज्या तद्द्वादशांशो भवति क्षितिज्या ॥१३१॥
त्रिज्यागुणा सा द्युगुणेन भक्ता
चरज्यका चापमतश्चरांशाः ।
इत्थं चरांशा उदयांशरीत्या
प्रत्यंशजाताः सुधिया विधेयाः ॥ १३२ ॥
दिङ्नागसत्र्यंशगुणैर्विनिघ्नी
पलप्रभा वा चरखण्डकानि ।
पलात्मकानि त्रिगृहोद्भवानि
स्थूलानि लोकव्यवहारसिद्धयै ॥ १३३ ॥
अथ स्वदेशे राशीनां प्रत्यंशोदयकालांशज्ञानम् ।
मेषादिराशित्रयभागकानां
चराणि शोध्यानि निरक्षजेषु ।
विलोमतस्तानि युतानि चैवं
कोटत्रये स्यादिति राशिषट्कम् ॥ १३४ ॥
तुलादिषट्कं तदतो विलोमा-
त्स्वोदयांशाः प्रतिभागकानाम् ।
व्यक्तस्वदेशक्षितिजोदयान्त-
र्यतो भवेत्स्वं चरखण्डमेव ॥ १३५ ॥
तिर्यक्स्थितं यच्च भमण्डलस्य
खण्डं तदल्पेन यदूर्ध्वसंस्थम् ।
अनल्पकेनोद्गमनं प्रयाति
कालेन चेत्थं किल दृक्प्रतीतिः ॥ १३६ ॥
स्वस्वापमैर्याम्यनतं मृगाद्यं व्यक्षोदये यत्तदतीव नम्रम् ।
याम्यास्ततस्तेन ततोपि चाल्पकालेन तद्याम्युदयं तथैव ॥१३७॥

उदङ्नतं कीदृगृचादि यत्तदृजुत्वमाप्नोत्यधिकेन तेन ।
कालेन यात्युद्गमनं ततोपि कालेन तस्मादुदया न तुल्याः ॥१३८॥

*धन्वन्ताच्च झषान्तो वा ततोन्तो मिथुनस्य यः ।
व्यस्ते पञ्चेन्दुनाडीभिस्त्वरोनाभिः स्वके च सः ॥ १३९ ॥

उदेति तद्वत्कन्यान्तो मिथुनान्तात्तथा ततः ।
धन्वन्तस्तिथिनाडीभिस्त्वराढ्याभिस्तयोः क्रमात् ॥ १४० ॥

भमण्डलार्द्धं च सदैव गर्भभूजाद्यतस्तोर्ध्वमधस्त तेन ।
उदेति यो यत्समयेन तेन तत्सप्तमोस्तं समुपैति नूनम् ॥ १४१ ॥

इत्थमुक्तं हि याम्याशविषयेष्विह तच्च वै ।
रसषट्कांशतः पूर्वं ज्ञेयं तत्परतो नहि ॥ १४२ ॥

अथ सूर्यादिभिर्देवैः स्वतन्त्रैश्च महर्षिभिः ।
दिग्देशकालैर्गणितप्रवृत्तिर्गदिता च या ॥ १४३ ॥

सा फलार्थं च तद्दृष्टमदृष्टं चेति तद्द्विधा ।
दृष्टं कुपृष्ठतः पृष्ठस्थितानां च कुकेन्द्रतः ॥ १४४ ॥

अदृष्टं तेन भूगर्भक्षितिजोर्ध्वोर्द्धगोलकः ।
दृश्यत्वेनादृतस्त्वादृश्यत्वेनान्यस्त्वधोस्ति यः ॥ १४५ ॥

अथाह्न्यद्योरात्रवृत्तानि चो-
न्मण्डलोर्ध्वं तथाधोनिम्नं संस्थितानि ।
खषट्नाडिकास्तद्धृतौ खाग्निनाद्य-
स्तदर्द्धेऽब्धिभागे तु पञ्चेन्दुनाड्यः ॥ १४६ ॥

सदा सौम्यगोले निरक्षीयभूजा-
त्वभूजं त्वधस्तोर्ध्वगं याम्यगोले ।
तयोरन्तरं कालवृत्ते चरं स्या-

---

* अत्र धन्वन्तात् इति पाठ एव साधुः धनुषा च धनुं विदुरित्यादि प्रामाण्यात् ।

द्वतेंशात्मकं यच्च तत्षड्विभक्तम् ॥ १४७ ॥

भवेन्नाडिकाद्यं च तद्युक्तहीनाः
क्रमाद्गोलयोरत्र पञ्चेन्दुनाड्यः ।
दिनार्द्धं भवेत्स्वाग्निघ्नं निशार्द्धं
द्विनिघ्ने कृते ते द्युरात्र्युन्मिती स्तः ॥ १४८ ॥

द्युरात्रवृत्तं क्षितिजोर्ध्वगं य-
द्दिनस्य रात्रेर्यदधःस्थितं स्यात् ।
तत्सौम्यगोलेऽधिकमल्पकं स्या-
द्याम्येऽधिकाल्पं दिनमानमस्मात् ॥ १४९ ॥

अल्पाधिकं तत्र निशाप्रमाणं
क्रमान्निरक्षे त्वधरोर्ध्वसाम्यात् ।
सदैव साम्यं द्युनिशोश्च सौम्य-
याम्यध्रुवाधःस्थितयोरपीत्थम् ॥ १५० ॥

तत्साधनं चार्कवशात्स्थिरर्क्षवशाद्भवेदार्क्षमिति प्रभेदः ।

लम्बांशका यत्र परापमांशसमाश्च तत्रापममण्डलाभम् ॥१५१॥

कुजं च मेषोद्गमनस्य कालेऽन्यथा न तत्कीटमुखं च तत्र ।

सदा कुजोर्ध्वं प्रवहभ्रमेण भ्रमत्यधो नक्रमुखं च तद्वत् ॥ १५२॥

लम्बाधिका क्रान्तिरुदक् च यस्य
यावच्च तावत्क्षितिजोर्ध्वगः सः ।
एवं हि लम्बाभ्यधिकाऽनुदक्स्था
क्रान्तिश्च तावत्स कुजादधःस्थः ॥ १५३ ॥

कुक्ष्नचापोनपलांशतोऽल्पा यस्य स्फुटाऽऽद्यापमहीनखाङ्काः ।
तद्भं सदैवोदितमूह्यमार्यैर्नृदृष्टिचिह्ने स्वकुपृष्ठसंस्थे ॥ १५४ ॥

ह्यंशयुङ्नवरसाः ६९ । २० पलभागा-

स्तत्र कार्मुकमृगौ नहि दृष्टौ ।
किं च कर्किमिथुनौ किल दृष्टौ
सर्वदैवमथ नागनगाख्याः ७८। १५ ॥ १५५ ॥

साङ्ग्रयः किल सदैव न दृष्टं तत्र वृश्चिकचतुष्टयं तथा ।
दृश्यते च वृषभाच्चतुष्टयं त्वेवमेव नवतिप्रमितोऽक्षः ॥ १५६ ॥

यत्र तत्र भदलं क्रियादिकं दृश्यते नहि सदा तुलादिकम् ।
दक्षिणाक्षवशतः कथयन्ति व्यत्ययेन किल चोत्तरजाक्षे ॥१५७॥

स्वक्षध्रुवेन्द्राधरसंस्थयोश्च
नाड्याङ्कयस्त्वक्षितिजाधऊर्ध्वम् ।
अदर्शनाद्दर्शनतो मिथोस्ति
व्यत्यासतो रात्रिदिनप्रमाणम् ॥ १५८ ॥

रवौ कुगर्भक्षितिजोर्ध्वगे स्याद्दिनं तथाधो रजनीति किम्वा ।
सन्दर्शनेर्कस्य दिनं सदैव तमी तमोहन्तुरदर्शने स्यात् ॥१५९॥

चेदाद्यरीत्येव दिनं तदोक्तं कथं भवेत्तच्चतुराननस्य ।
चेद्दर्शनोत्थं च तदा कुपृष्ठदृक्चिह्नतः पृष्ठकुजादधस्तात् ॥१६०॥

अदर्शनाद्गर्भकुजोर्ध्वगन्तद्दिनं यदुक्तं किल तत्कथं स्यात् ।
अत्रोच्यते दर्शनतो यदुक्तं तद्दृक्फलार्थं यदिहाद्यरीत्या ॥१६१॥

अदृष्टतन्त्रोक्तफलार्थमुक्त-
मित्थं न पक्षद्वयतोपि दोषः ।
परन्तु सिद्धान्तशिरोमणिस्थं
ब्राह्मं दिनं भूवशतोत्र नोक्तम् ॥ १६२ ॥

भूम्याश्रयेणैव यथोदयास्त-
कुजान्तरे यद्रविदर्शनोत्थम् ।
कुपृष्ठतोप्यूर्ध्वगदेशगानां

दिनप्रमाणं कथयामि सम्यक् ॥ १६३ ॥
कुखण्डकार्कश्रवणौ तु यौ स्त-
स्तद्वर्गयोरन्तरमूलभक्ता ।
तयोर्द्युतिस्त्रावनिखण्डहीना
स्याद्योजनैः पृष्ठदृगौच्चमानम् ॥ १६४ ॥
तैर्योजनस्यावयवैः सुसूक्ष्मैः
स्वभूमिपृष्ठोर्ध्वगतैर्भवेच्च ।
यद्दृष्टिचिह्नं किल तद्वशेन
दृश्यः कुगर्भक्षितिजस्थितोऽर्कः ॥ १६५ ॥
यथायथोर्ध्वं च ततोपि तद्दृक्-
चिह्नं कुगर्भक्षितिजात्स्वगोले ।
तथातथाधःस्थितदेशगोऽर्को-
दृश्यो भवेच्चोर्ध्वगदृग्वशेन ॥ १६६ ॥
वदामि तच्चानयनं च याः स्यु-
र्लिप्ताश्च कुच्छन्नभवा इनस्य ।
तद्युक्स्वदृश्यांशजकोटिमौर्व्या-
हृतं त्रिभज्यागुणितं कुखण्डम् ॥ १६७ ॥
कुखण्डकोनं च कुपृष्ठजोर्ध्वं तद्योजनैः स्यान्निजदृष्टिचिह्नम् ।
दृश्यांशकज्ञानमतोपि गर्भभूजादधःस्याच्च विलोमरीत्या ॥१६८॥
ध्रुवाधःस्थितानामपीत्थं प्रकल्प्यं
स्वगर्भोयनाद्याख्यभूजादधोपि ।
द्युवैकादिराश्यन्तजापक्रमो यः
स द्वर्यस्य कुच्छन्नलिप्ताभिराढ्यः ॥ १६९ ॥
ततः कोटिमौर्व्योद्धृतं त्रिज्यकाघ्नं

कुखण्डं कुखण्डोनितं योजनाद्यम् ।
त्रिधैवं त्रिराश्यन्तजोत्थं फलं स्या-
त्कुपृष्ठोर्ध्वसप्तेन्दुभि १७र्वेदबाणैः ५४ ॥ १७० ॥

तथा षण्नगै ७६ र्योजनैर्यानि दृष्ट्यु-
द्भवानीह चिह्नानि तत्तद्वशेन ।
क्रमादेकराशिद्विराशित्रिराश्यु-
द्भवार्कध्रुवक्रान्तिभागावधि स्यात् ॥ १७१ ॥

सदा नाडिकाख्यस्वगर्भीयभूजा-
दधःस्थं रवेर्दर्शनं स्वीयगोले ।
तदूर्ध्वं स्वदिक्स्थेऽर्कगोले सदास्ति
रवेर्दर्शनं चेति तत्स्याद्द्युमानम् ॥ १७२ ॥

तेन मीनवदनाच्च तुलान्तं कुम्भसंज्ञकमुखादलिभान्तम् ।
नक्रसञ्ज्ञकमुखाद्धनुषोऽन्तर्यावदर्कवशतो दिनमानम् ॥ १७३ ॥

स्यात्क्रमाद्यदवशिष्टमिह स्याद्रात्रिरुत्तरगतध्रुवगानाम् ।
कन्यकावदनतस्त्वजभान्तं सिंहसंज्ञकमुखाद्वृषभान्तम् ॥ १७४ ॥

कीटसञ्ज्ञकमुखान्मिथुनान्तं स्याद्दिनं च यमदिग्ध्रुवगानाम् ।
स्वस्वयोजनमितान्तरगानां स्वीयभूमिगतपृष्ठत एवम् ॥ १७५ ॥

आद्यैर्यदत्रोदितमस्ति तत्तु-
तदैव गर्भोत्थकुजं यदा स्यात् ।
अस्तोदयाख्यक्षितिजं पुरोक्त-
मतोऽन्यथा नेति सुधीभिरूह्यम् ॥ १७६ ॥

अत्रैकद्व्यादिमासैर्यद्भदितं क्षितिगर्भतः ।
दृग्ज्यभागैस्तदत्रापि दिनोत्थं ज्ञेयमुक्तवत् ॥ १७७ ॥

जिनाढ्यकुच्छन्नलवाधिकास्ते

लग्नांशसिद्धांशकयोगतुल्यैः ।
दृश्यांशकैरुक्तवदेव यत्स्या-
दृक्चिह्नकं खक्षितिपृष्ठचिह्नात् ॥ १७८ ॥
यैर्योजनैस्तद्दशतोपि तत्र-
सदोदितोर्को भवतीति चित्रम् ।
कुच्छन्नकोप्यल्पकदृश्यकांशो-
ल्लवैः खदृक्चिह्नजयोजनैस्तु ॥ १७९ ॥
सर्वाशदेशेपि कुगर्भभूजादधः खतदृश्यलवैः समन्तात् ।
अस्ति ग्रहेन्द्राश्रितगोलमध्ये सन्दर्शनं यत्तदपीह चित्रम् ॥१८०॥
कुच्छन्नकोप्यल्पकदृश्यकांशै-
रुक्तं कुगर्भक्षितिजादधःस्थैः ।
ऊर्ध्वस्थिता दृश्यलवा यदि स्युः
कुच्छन्नभागाऽनधिकास्तदानीम् ॥ १८१ ॥
कुच्छन्नदृश्यांशवियोगकोटि-
ज्यया हृतं त्रिज्यकया विनिघ्नम् ।
कुखण्डकं तत्तु कुखण्डकोनं
कुपृष्ठतोप्यूर्ध्वगदृष्टिचिह्नम् ॥ १८२ ॥
कुखण्डयुक्तोर्ध्वगदृष्टचिह्नोद्धृतं कुखण्डं त्रिगुणेन निघ्नम् ।
तच्चापकुच्छन्नयुतिः खनन्दैर्विश्लेषिता दृश्यलवाश्च शेषम् ॥१८३॥
खाङ्का युतेश्चेदधिका कुजान्ते
त्वधःस्थिताश्चोर्ध्वगता यदाल्पाः ।
अन्योदितादूर्ध्वगदृष्टिचिह्ने
दृग्गोलसन्दर्शनमन्यथोक्तम् ॥ १८४ ॥
सुवर्तुलस्यावनिगोलकस्य

पृष्ठोर्ध्वसंस्थान्नरदृष्टिचिह्नात् ।
अर्कस्य दृक्सूत्रवशाद्यदुक्तं
तत्सद्यदा तद्व्यवधायकं न ॥ १८५ ॥

अथात्रोपपत्त्यर्थं क्षेत्रदर्शनम् ।




चक्रांशकाङ्के क्षितिजाख्यवृत्ते
प्राक्स्वस्तिकाद्भवमण्डलान्तः ।
दिगंशकाः स्वीयभुजाख्यदिक्का-
स्तथा द्युरात्रावधिकाऽग्रकांशाः ॥ १८६ ॥
भमण्डलस्थग्रहगोलदिक्का-
स्त्वेवं हि याम्योत्तरमण्डलेऽपि ।
अक्षांशकास्ते तु सदैव याम्याः
खमध्यदेशाद्विषुवं तु यावत् ॥ १८७ ॥

तथापमांशा ग्रहगोलदिक्का
नाड्याक्रयात् स्वद्युनिशाख्यवृत्तम् ।
एवं खमध्यान्नतभागकाः स्यु-
र्द्युरात्रवृत्तावधिका अतोऽत्र ॥ १८८ ॥
ऐक्यं दिगैक्येऽन्तरकं विभेदे
चैवं हि तत्संस्करणप्रकारात् ।
क्रान्त्यक्षसंस्कारमिता नतांशा-
स्तदूनखाङ्का द्युदलोन्नतांशाः ॥ १८९ ॥
नतांशकाक्षांशकयोर्विलोम-
संस्कारतस्त्वापमभागकाः स्युः ।
इत्थं यदार्कस्य ततो विलोमा-
ज्ज्ञानोर्भुजांशाः स्वपदस्थिताः स्युः ॥ १९० ॥
आद्यं पदं चेद्भुज एव भानुः पदे द्वितीये तु तदूनषड्भम् ।
रसान्वितं स्यात्तु पदे तृतीये चक्रच्युतं स्याच्च पदे चतुर्थे ॥ १९१ ॥
आद्ये पदेऽपचयनी पलभाल्पिका स्यात्
छायाल्पिका भवति वृद्धिमती द्वितीये ।
छायाधिका भवति वृद्धिमती तृतीये
तुर्ये पुनः क्षयवती तदनल्पिका च ॥ १९२ ॥
वृद्धिं व्रजन्ती यदि दक्षिणाग्र-
छाया तथापि प्रथमं पदं स्यात् ।
ह्रासं प्रयान्तीमथ तां विलोक्य
रवेर्विजानीहि पदं द्वितीयम् ॥ १९३ ॥
स्वतु चिह्नैरिदं पूर्वैरुक्तं सर्वत्र तन्नहि ।
केवलं कुकविप्रीत्यै पदज्ञप्त्यै न तद्रवेः ॥ १९४ ॥

प्राग्भागके गर्भकुजे विलग्नो भमध्यतत्त्वांशोऽस्ति तदेव लग्नम् ।
षड्भान्तरेतोऽस्तविलग्नमेवं स्यादूर्ध्वयाम्योत्तरगं खलग्नम् ॥ १९५ ॥
सावनोऽभीष्टकालस्येल्लग्नं तात्कालिकाऽर्कतः ।
नाक्षत्रो यदि तल्लग्नमुदयार्कात्प्रसाधयेत् ॥ १९६ ॥
चलसंस्कृततिग्मांशोर्यत्कलाद्यं गतं तु तत् ।
षष्टिशुद्धं तु तद्भोग्यमुत्क्रमक्रमलग्नयोः ॥ १९७ ॥
साधनार्थं तु ते युक्ते वर्त्तमानोदयन ते ।
निघ्ने षष्ट्या हृते तौ स्वः कालौ यातैष्यसंज्ञकौ ॥ १९८ ॥
अथ घट्यादिको योऽत्र कालः षड्गुणितश्च सः ।
ततः शोध्यौ तु तौ यातगम्यौ स्वस्वाङ्गसाधने ॥ १९९ ॥
तथा यातैष्यका ये च स्वोदयास्तेऽपि तत्र वै ।
शोध्याः शेषे भवेतां ते व्युत्क्रमक्रमलग्नजे ॥ २०० ॥
अशुद्धोदयभक्ते ते षष्टिघ्ने कलिकादिके ।
फले स्तः क्रमजं यच्च फलं तत्किल योजयेत् ॥ २०१ ॥
विशुद्धोदयकोष्ठोर्ध्वस्थितराश्यंशकेषु च ।
यद्वोत्क्रमजं तच्चाशुद्धराश्यंशकेषु च ॥ २०२ ॥
शोध्यं व्यस्तचलांशैश्च संस्कार्यं लग्नमाहृतम् ।
शुभाशुभफलज्ञप्त्यै स्वतन्त्रैः स्फुटखेटवत् ॥ २०३ ॥
यातैष्यकालतः स्वल्पाः स्वेष्टकालांशकास्तदा ।
षष्टिघ्नाः स्वोदयाप्ताश्च कलास्तद्धीनयुक्कृतः ॥ २०४ ॥
अर्को लग्नं भवेदिष्टकालस्यातो विलोमतः ।
चलसंस्कृतलग्नार्कभुक्तभोग्यौ च यौ क्रमात् ॥ २०५ ॥
कालौ तत्संयुतौ मध्योदयांशाः संयुताश्च ते ।
रसाप्ताः स्वोदयादूर्ध्वमिष्टघट्यः पुरोत्क्रमात् ॥ २०६ ॥

चललग्नार्कयोरेकगृहभागस्थयोस्तयोः ।
कलाद्यमन्तरं यत्स्यात्तच्च स्वोदयसङ्गुणम् ॥ २०७ ॥
भांशहृत्स्वेष्टकालः स्याद्यद्यर्काल्लग्नमल्पकम् ।
तदार्कोदयतः पूर्वं कालः स्यादुदयार्कतः ॥ २०८ ॥
स चार्कः सावनस्त्वायं तत्कालार्कवशाद्भवेत् ।
अन्यमानं यदाचेष्टं तदा तच्चासकृद्वशात् ॥ २०९ ॥
भवृत्तनाडीवलयैक्यचिह्ना-
दजादितः खस्वपदस्थिता ये ।
स्वेष्टांशकानां विषुवांशकास्ते
स्पष्टार्कतः पूर्ववदत्र साध्याः ॥ २१० ॥
ते षड्गुणाभीष्टघटीभिराढ्या
लग्नोद्भवास्ते विषुवांशकाः स्युः ।
प्राग्वत्ततः स्वेष्टलवाः प्रसाध्या-
स्ते लग्नभागा अजतो भवन्ति ॥ २११ ॥
त्रिंशद्विभक्ता गृहपूर्वकं त-
ल्लग्नं निरक्षे चलसंस्कृतं स्यात् ।
एवं चलार्काच्च विलग्नतोऽत्र
यथोक्तरीत्या विषुवांशका ये ॥ २१२ ॥
तयोर्वियोगो रसहृद्विलब्धं
स्वार्कोदयात्स्युर्घटिका अभीष्टाः ।
विलग्नसिद्धा विषुवांशका ये
भांशाधिका भांशविहीनितास्ते ॥ २१३ ॥
शेषैस्तु तैर्लग्नमिह प्रसाध्यं
प्राग्वत्ततः स्यात्समयो निजेष्टः ।

लग्नोद्भवास्तेऽधिका रवेः स्यु-
स्तदोदयादूर्ध्वमधोऽल्पके सः ॥ २१४ ॥

अथान्यथाजादिगृहांशकानां साध्या यथोक्त्या विषुवांशका ये ।
भनाडिकावृत्तयुतेरजादेर्गोलक्रमादूनयुतास्स्वरांशैः ॥ २१५ ॥

स्वैःस्वैश्च ते स्वोदयकालभागाः
प्रत्यंशकानामिह कोष्ठकस्थाः ।
षड्दस्र २६ संख्याकपलांशदेशे ।
विलग्नसिद्ध्यै लिखिताः सुखार्थम् ॥ २१६ ॥

अत्राङ्कपत्रेऽपि कृतायनांश-
स्फुटार्कभुक्तालयभागसंस्थम् ।
भागादिकं स्वाग्रिमजान्तरघ्न-
भुक्तार्कलिप्ताखरसांशयुक्तम् ॥ २१७ ॥

षड्घ्नेष्टनाडीयुतमंशपूर्वं
स्वासन्नपृष्ठान्तरकं खषड्घ्नम् ।
पृष्ठाग्रिमांशान्तरहृत्कलाढ्याः
स्वासन्नपृष्ठोर्ध्वगृहांशकाश्च ॥ २१८ ॥

लग्नं भवेत्सायनकं यदा त-
त्तदंशपूर्वं खरसानलोर्ध्वम् ।
तदा तदूनं प्रविधाय साध्यं
तच्छेषरूपांशकपूर्वकाद्य ॥ २१९ ॥

रात्रीष्टकाले तु सषड्भसूर्याल्लग्नं विलोमायनसंज्ञतं तत् ।
उक्ताद्विलग्नानयनप्रकाराद्विलोमतः स्यात्समयो निजेष्टः ॥ २२० ॥

षट्संगुणाभिर्नतनाडिकाभि-
र्हीनान्विता अर्कजवैषुवांशाः ।

## षड्विंशतिमितेऽक्षांशे ।

| भागाः | ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | २७ | २८ | २९ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मे ० | ० | ० | १ | २ | २ | ३ | ४ | ५ | ५ | ६ | ७ | ७ | ८ | ९ | १० | १० | ११ | १२ | १३ | १३ | १४ | १५ | १६ | १६ | १७ | १८ | १९ | १९ | २० | २१ |
| | ० | ४३ | २६ | १० | ५३ | ३६ | २० | ३ | ४७ | ३१ | १४ | ५८ | ४२ | २६ | १० | ५४ | ३८ | २२ | ७ | ५१ | ३६ | २१ | ६ | ५१ | ३६ | २२ | ७ | ५३ | ३९ | ३३ |
| | ० | २१ | ४२ | ५ | २८ | ५४ | २१ | ५१ | २४ | १ | ४१ | २५ | १४ | ८ | ८ | १३ | २५ | ४४ | १० | ४३ | ३४ | १४ | १२ | २१ | ३८ | ६ | ४२ | ३३ | ३४ | ४६ |
| वृ १ | २२ | २२ | २३ | २४ | २५ | २६ | २६ | २७ | २८ | २९ | ३० | ३० | ३१ | ३२ | ३३ | ३४ | ३५ | ३५ | ३६ | ३७ | ३८ | ३९ | ४० | ४१ | ४२ | ४२ | ४३ | ४४ | ४५ | ४६ |
| | १२ | ५९ | ४५ | ३२ | १९ | ७ | ५५ | ४३ | ३१ | १९ | ८ | ५७ | ४७ | ३६ | २६ | १६ | ७ | ५८ | ४९ | ४० | ३२ | २४ | १६ | ९ | २ | ५५ | ५० | ४३ | ३८ | ३२ |
| | ९ | ४६ | ३६ | ३९ | ५५ | २५ | १७ | १० | २५ | ५६ | ४२ | ४४ | ४ | ४१ | ३४ | ४४ | ३२ | १ | ७ | ३२ | १४ | १८ | ४० | २३ | ४५ | ४८ | २१ | ५५ | ० | ४७ |
| मि २ | ४७ | ४८ | ४९ | ५० | ५१ | ५२ | ५३ | ५४ | ५५ | ५६ | ५६ | ५७ | ५८ | ५९ | ६० | ६१ | ६२ | ६३ | ६५ | ६६ | ६७ | ६८ | ६९ | ७० | ७१ | ७२ | ७३ | ७४ | ७५ | ७६ |
| | २७ | २३ | १९ | १५ | ११ | ८ | ६ | ३ | १ | ० | ५८ | ५७ | ५७ | ५७ | ५७ | ५७ | ५८ | ५९ | १ | ३ | ५ | ८ | ११ | १४ | १७ | २१ | २५ | २१ | ३५ | ३९ |
| | ५४ | ३३ | २२ | १४ | ५७ | ५१ | ८ | ४६ | ४७ | ८ | ५१ | ५६ | २३ | ११ | २० | ५० | ४२ | ५४ | २८ | ११ | ३० | ८ | १ | १४ | ४५ | ३५ | ४३ | १० | ० | ५४ |
| क ३ | ७७ | ७८ | ७९ | ८१ | ८२ | ८३ | ८४ | ८५ | ८६ | ८७ | ८८ | ८९ | ९१ | ९२ | ९३ | ९४ | ९५ | ९६ | ९७ | ९९ | १०० | १०१ | १०२ | १०३ | १०४ | १०६ | १०७ | १०८ | १०९ | ११० |
| | ४५ | ५० | ५६ | २ | ८ | १५ | २२ | २९ | ३६ | ४४ | ५१ | ५८ | ७ | १५ | २३ | ३२ | ४१ | ४९ | ५८ | ७ | १६ | २५ | ३५ | ४४ | ५३ | ३ | १२ | २२ | ३१ | ४१ |
| | १२ | ४६ | ३५ | ४० | ५९ | ३४ | २१ | २२ | ३६ | २ | ४० | २९ | २८ | ३७ | ५६ | २४ | १ | ४५ | ३६ | ३४ | ३९ | ४९ | ४ | २४ | ३९ | १५ | ४७ | २० | ५५ | ३२ |
| सिं ४ | १११ | ११३ | १४ | १५ | १६ | १७ | १८ | १९ | २१ | २२ | २३ | २४ | २५ | २६ | २८ | २९ | ३० | ३१ | ३२ | ३३ | ३४ | ३६ | ३७ | ३८ | ३९ | ४० | ४१ | ४२ | ४४ | १४५ |
| | ५१ | ० | १० | २० | २९ | ३९ | ४९ | ५८ | ८ | १७ | २७ | ३६ | ४६ | ५५ | ४ | १४ | २३ | ३२ | ४१ | ५० | ५९ | ८ | १७ | २५ | ३४ | ४२ | ४९ | ५९ | ७ | १६ |
| | ११ | ५१ | ३१ | १ | ५० | ७ | ४४ | १४ | ५० | २१ | २१ | ४९ | १४ | ३५ | ५४ | ९ | २० | २७ | ३० | २९ | २४ | १५ | १ | ४२ | १८ | ५० | १७ | ४० | ५७ | १० |
| क ५ | १४६ | १४७ | १४८ | १४९ | १५० | १५२ | ५३ | ५४ | ५५ | ५६ | ५७ | ५८ | ५९ | ६१ | ६२ | ६३ | ६४ | ६५ | ६६ | ६७ | ६८ | ६९ | ७१ | ७२ | ७३ | ७४ | ७५ | ७६ | ७७ | १७८ |
| | २४ | ३२ | ४० | ४८ | ५६ | ३ | ११ | १९ | २६ | ३४ | ४१ | ४८ | ५६ | ३ | १० | १७ | २४ | ३१ | ३८ | ४५ | ५२ | ५८ | ६ | १२ | १९ | ३६ | ३३ | ३९ | ४६ | ५३ |
| | १८ | २१ | २० | १४ | ४ | ४९ | ३० | ६ | ३८ | ६ | २१ | ५१ | ८ | २१ | ३० | ३७ | ४१ | ४२ | ४० | ३५ | २८ | २० | ९ | ५७ | ४३ | १८ | २० | ५४ | ३७ | १८ |

षड्विंशतिमिते ऽत्रांशे

| भागाः | ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | २७ | २८ | २९ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| तु | १८० | १८१ | १८२ | ८३ | ८४ | ८५ | ८६ | ८७ | ८८ | ९० | ९१ | ९२ | ९३ | ९४ | ९५ | ९६ | ९७ | १९९ | २०० | २०१ | २०२ | २०३ | २०४ | २०५ | २०६ | २०७ | २०९ | २१० | २११ | २१२ |
|  | ० | ६ | १३ | २० | २६ | ३३ | ४० | ४७ | ५३ | ० | ७ | १४ | २१ | २८ | ३५ | ४२ | ४९ | ६ | ३ | ११ | १८ | २५ | ३२ | ४० | ४२ | ५६ | ३ | ११ | १९ | १७ |
| ६ | ० | ४१ | २२ | ६ | ४९ | ३२ | १७ | ३ | ५० | ४० | ३१ | २५ | २० | १५ | १९ | २३ | २९ | ९ | ५२ | ९ | ३० | २२ | ५४ | ३० | ११ | ५६ | ५६ | ४५ | ३९ | ३८ |
| वृ | २१३ | २१४ | १५ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २५ | २६ | २७ | २८ | २९ | ३० | ३१ | ३३ | ३४ | ३५ | ३६ | ३७ | ३८ | ४० | ४१ | ४२ | ४३ | ४४ | ४५ | २४६ |
|  | ३५ | ४३ | ५२ | ० | ८ | १७ | २५ | ३४ | ४२ | ५१ | ० | ९ | १८ | २७ | ३६ | ४५ | ५५ | ४ | १३ | २३ | ३२ | ४२ | ५१ | १ | १० | २० | ३० | ३९ | ४९ | ५९ |
| ७ | ५२ | ५० | २ | २० | ४२ | १० | ४२ | १८ | ५९ | ४५ | ३६ | ३० | ३० | ३२ | ५० | ५१ | ६ | २४ | ४६ | ११ | २९ | ९ | ४२ | १६ | ५३ | ३१ | १० | ४९ | २९ | ९ |
| ध | २४८ | ४९ | ५० | ५१ | ५२ | ५३ | ५५ | ५६ | ५७ | ५८ | ५९ | ६० | ६२ | ६३ | ६४ | ६५ | ६६ | ६७ | ६८ | ७० | ७१ | ७२ | ७३ | ७४ | ७५ | ७६ | ७७ | ७८ | ८० | २८१ |
|  | ८ | १८ | २८ | ३७ | ४६ | ५६ | ६ | १५ | २४ | ३४ | ४३ | ५२ | १ | १० | १८ | २७ | ३६ | ४४ | ५२ | ० | ८ | १५ | २३ | ३० | ३७ | ४४ | ५१ | ५७ | ३ | ९ |
| ८ | ४९ | २७ | ४ | ४० | २७ | १४ | १२ | ३६ | ५५ | ११ | २१ | २६ | २३ | १५ | ५९ | ३६ | ३ | २२ | ३१ | ३१ | १० | ५८ | २४ | ३१ | ३९ | २६ | ० | १९ | २४ | २४ |
| म | २८२ | ८३ | ८४ | ८५ | ८६ | ८७ | ८८ | ८९ | ९० | ९१ | ९२ | ९३ | ९४ | ९६ | ९७ | ९८ | २९९ | ३०० | ३०१ | ३०२ | ३०३ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ३११ |
|  | १४ | २० | २५ | २९ | ३४ | ३८ | ४२ | ४५ | ४८ | ५१ | ५४ | ५६ | ५८ | ० | १ | २ | २ | २ | २ | २ | १ | ५९ | ५८ | ५६ | ५३ | ५१ | ४८ | ४४ | ४० | ३६ |
| ९ | ४८ | ५ | ६ | ५० | १६ | २५ | १४ | ४६ | ५८ | ५२ | ३५ | ३९ | ३२ | ५ | १८ | ९ | ३९ | ४९ | ३७ | १० | ४ | ५२ | १३ | १३ | ५२ | ८ | १ | ३६ | ४७ | ४८ |
| कुं | ३१२ | १३ | १४ | १५ | १६ | १७ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | २४ | २५ | २६ | २७ | २८ | २९ | २९ | ३० | ३१ | ३२ | ३३ | ३३ | ३४ | ३५ | ३६ | ३३७ |
|  | ३२ | २७ | २१ | १६ | १० | ४ | ५७ | ५० | ४३ | ३५ | २७ | १९ | १० | १ | ५२ | ४३ | ३३ | २३ | १२ | २ | ५१ | ४० | २८ | १६ | ४ | ५२ | ५२ | २७ | १४ | १ |
| १० | ६ | १३ | ५९ | १४ | २८ | ११ | ३४ | ३७ | १९ | ४२ | ४५ | २८ | ५३ | ५९ | ४६ | १५ | २६ | १८ | ५६ | १५ | १८ | ४ | ३४ | ५० | ५० | ३५ | ५ | २१ | २४ | १४ |
| मी | ३३७ | ३८ | ३९ | ४० | ४० | ४१ | ४२ | ४३ | ४३ | ४४ | ४५ | ४६ | ४६ | ४७ | ४८ | ४९ | ४९ | ५० | ५१ | ५२ | ५२ | ५३ | ५४ | ५४ | ५५ | ५६ | ५७ | ५७ | ५८ | ३५९ |
|  | ४७ | ३४ | २० | ६ | ५२ | ३७ | २३ | ८ | ५३ | ३८ | २३ | ८ | ५२ | ३७ | २१ | ५ | ४९ | ३३ | १७ | १ | ४५ | २८ | १२ | ५६ | ३९ | २३ | ६ | ४४ | ३३ | १६ |
| ११ | ५० | १४ | २६ | २७ | १६ | ५४ | २१ | ३९ | ४७ | ४६ | ३६ | १७ | ५० | १६ | ३५ | ४६ | ५२ | ५१ | ४६ | ३५ | १९ | ५९ | ३५ | ८ | ३२ | ६ | ३१ | ५५ | २७ | ३९ |

संध्याङ्कतः प्राक्परतोथ तज्ज्ञाः
क्षेत्रांशकाः खाग्निहृताः खलग्नम् ॥ २२१ ॥

किं वा विलग्नाद्रविवन्निशार्द्धं
तत्कालतः षड्भयुताद्विलग्नात् ।
लग्नं प्रसाध्यं दशमं भवेत्त-
द्व्यस्तोदयैः षड्युतमम्बुलग्नम् ॥ २२२ ॥

लग्नांशकांशज्यकया खलग्न-
नतांशजीवा गुणिता विभक्ता ।
त्रिभज्यया तत्फलचापभागाः
खवित्रिभाङ्गान्तरबाहुभागाः ॥ २२३ ॥

दृग्वृत्तगार्कोन्नतभागजीवा
त्रिभज्यया संगुणिता विभक्ता ।
लग्नार्कयोरन्तरजीवया त-
च्चापांशका दृग्गतिचापभागाः ॥ २२४ ॥

दृक्क्षेपचापोत्थलवाश्च ते स्युः
खाङ्कच्युतास्ताविह चान्यरीत्या ।
खलग्नकस्योन्नतभागजीवा
त्रिभज्यया संगुणिता विभक्ता ॥ २२५ ॥

खवित्रिभाङ्गान्तरकोटिमौर्व्या
स्याद्दृग्गतिश्चापलवा अतो ये ।
तेषां च कोट्युद्भवशिञ्जिनी स्या-
द्दृक्क्षेपकः खाङ्कनतांशदिक्कः ॥ २२६ ॥

त्रिप्रश्नरीत्या द्युगतं द्युशेषं
त्रिभोनलग्नस्य विधाय साध्यः ।

कालो नतस्यात्र च तज्ज्यका सा
द्युजीवया वित्रिभलग्नकस्य ॥ २२७ ॥
निघ्नी स्वलग्नाग्रकया विभक्ता दृक्क्षेपको मध्यनतांशदिक्कः ।
यद्वेष्टदिक्संस्थितवित्रिभाङ्गाद्दिगंशकोटिज्यकयेत्यनेन ॥ २२८ ॥
यथोचितं वित्रिभलग्नकस्य
दृक्क्षेपमानं सुधिया प्रसाध्यम् ।
लग्नाग्रकाचापजकोटिभागा
वाङ्गंशकाश्च क्रमशस्तु वेद्याः ॥ २२९ ॥
त्रिभोनलग्नस्य दिगंशकाख्या
दिक्कोटिभागाश्च सदैव विज्ञैः ।
दृङ्मण्डलं वित्रिभलग्नसंस्थं
दृक्क्षेपवृत्तं प्रवदन्ति सन्तः ॥ २३० ॥
ज्या वित्रिभाङ्गापमजाश्च जीवा
चाक्षद्युमौर्व्या विहृता त्रिमौर्व्या ।
गुण्या तयोश्चापसुसंस्कृतेश्च
दृक्क्षेपचापं स्वदिशि स्फुटं स्यात् ॥ २३१ ॥
यद्वा सौरोक्तदृक्क्षेपः कार्यः स त्रिगुणाहृतः ।
खवित्रिभाङ्गभेदस्य कोटिज्याघ्नः स्फुटो भवेत् ॥ २३२ ॥
अत्रोपपत्तिः प्रथमं स्वलग्नं
गोलस्य सन्धिं परिकल्प्य तस्मात् ।
कुजं तु नाडीवलयं भवृत्तं
भवृत्तमेवात्र विलग्नभान्वोः ॥ २३३ ॥
ये त्वन्तरांशाः किल ते रवेः स्युः
क्षेत्रांशकाः कल्पितगोलसन्धेः ।

दृङ्मण्डलं वित्रिभलग्नजं चा-
यनाभिधं तत्र च दृग्गतिर्या ॥ २३४ ॥

परापमोर्कोन्नतभागतुल्योपमोत्र साध्यः परमापमोतः ।
एवं खमध्यात्मकगोलसन्धेर्दृङ्मण्डले वित्रिभखाङ्गसक्ते ॥ २३५ ॥

तयोः कुजे यद्विवरं विलग्नाग्रांशाः सदा ते परमापमांशाः ।
खवित्रिभाङ्गान्तरकं भवृत्ते खेष्टापमो मध्यनतांशका ये ॥२३६॥

क्षेत्रांशकाः खाङ्गखगस्य ते स्युर्दृक्क्षेपकांशा विषुवांशकाख्याः ।
खवित्रिभाङ्गस्थितदृग्भवाभनाडिकामण्डलयोः क्रमेण ॥२३७॥

इत्थं चापक्षेत्रजातं च सर्वं
क्रान्तिक्षेत्रोक्तरूपाद्भिन्नम् ।
तेनात्रैतत्खाङ्गदृक्क्षेपकांश-
ज्ञानं प्राग्वत्पण्डितानां सुबोधम् ॥ २३८ ॥

गोलवृत्तसूत्राणां संवन्धाद्यानि यानि च ।
क्षेत्राणि जात्यसंज्ञानि तैरेव ज्ञानमुत्तमम् ॥ २३९ ॥

गोलपृष्ठस्थचापाख्यक्षेत्राणां जायते ध्रुवम् ।
ऋजुजात्यान्यतः सम्यक् तानि वच्म्यम्यसंशयम् ॥ २४० ॥

पूर्वापरस्वस्तिकसन्निवद्धं पूर्वापरं सूत्रमुदाहरन्ति ।
यत्स्यात्समाख्यदयचिह्नवद्धं याम्योत्तरं तद्गदितं च सूत्रम् ॥२४१॥

द्युरात्रवृत्तक्षितिजैक्यके ये पूर्वापरस्थे तु तयोर्निवद्धम् ।
सूत्रं च तत्स्यादुदयास्तसंज्ञमुन्मण्डलाद्यर्निशमण्डलैक्ये ॥२४२॥

ये प्राक्परस्थे च तयोर्निवद्धं तद्व्याससूत्रं प्रवदन्ति तज्ज्ञाः ।
ऊर्ध्वाधरस्वस्तिकयोश्च वद्धमेवं तदूर्ध्वाधरसूत्रमुक्तम् ॥ २४३ ॥

निरक्षजोर्ध्वाधरसूत्रमेवं तथैव भूस्थं किल कोणसूत्रम् ।
भूकोणवृत्तैक्यनिवद्धमन्यान्यपीह कार्याणि निजेप्सितानि ॥२४४॥

तिर्यग्गतं यच्च भवेद्भाभ्यां तत्सूत्रगं चान्तरमत्रवोध्यम् ।
द्वयोर्द्वयोः सूत्रकयोः समानान्तरस्थयोस्तूदितयोरथैवम् ॥ २४५ ॥
पूर्वापरोदयास्ताख्यसूत्रयोरन्तरं भवेत् ।
सर्वत्रैवाग्रकातुल्यं व्यासाख्यप्राक्परान्तरे ॥ २४६ ॥
तथा क्रान्तिज्यका व्यासोदयास्तविवरं तथा ।
कुज्यातुल्यं द्युजीवाख्ये त्रिज्याख्ये सा चरज्यका ॥ २४७ ॥
यथैव खेटः परदिग्भ्रमेण प्रयाति दृग्वृत्तमपीह तत्स्थम् ।
भवेत्खमध्याच्च कुतद्युती ये तयोर्निबद्धं किल दृक्कुसूत्रम् ॥ २४८ ॥
तत्खेचरेन्द्रे सममण्डलस्थे भवेच्च पूर्वापरसूत्ररूपम् ।
याम्योत्तरे कोणगते च तत्तद्धसूत्ररूपं क्षितिगर्भसक्तम् ॥ २४९ ॥
तिर्यक् ततो यद्ग्रहगं नराख्यसूत्रं च तत्सूत्रकयोर्युतौ हि ।
स्याच्छङ्कुमूलं परपूर्वसूत्रादस्तोदयाख्यावधि गोलदिक्का ॥ २५० ॥
अग्रा तदग्रादपि शङ्कुमूलं
यावच्च तच्छङ्कुतलं यमाशम् ।
सौम्याग्रकाग्रान्नृतलं यमाशं
याम्याग्रकाग्रात्सुतरां च याम्यम् ॥ २५१ ॥
दिवैव सौम्यं निशि तद्द्युरात्रवृत्तस्य तद्दिग्गमनाद्यमाशे ।
तच्छङ्कुमूलं परपूर्वसूत्राद्यदन्तरे यद्दिशि तच्च तद्दिक् ॥ २५२ ॥
भुजाभिधं शङ्कुतलाग्रकाख्य-
संस्कारतः स्याद्भुज एव सोऽत्र ।
कोटिस्तु पूर्वापरसूत्रखण्डं
दृग्ज्या श्रुतिः स्वक्षितिजेऽपि चैवम् ॥ २५३ ॥
दिग्ज्या भुजो दृक्कुजसूत्रगा स्या-
त्त्रिज्या श्रुतिः प्राक्परगा च कोटिः ।

पूर्वापरस्वस्तिकतो द्युरात्र-
वृत्तावधि स्वीयकुजेऽग्रकांशाः ॥ २५४ ॥
उन्मण्डले स्यादपमस्तथैव मध्ये तयोश्च द्युनिशे चरं स्यात् ।
याम्योत्तरे स्वस्तिकतश्चिभे स्युस्तयोश्च मध्येऽत्तलवाः सदैव ॥ २५५ ॥
तथैव नाडीक्षितिजान्तराले
लम्बांशकाश्चापि सदैव गोले ।
अथेष्टकाले क्षितिजाच्च खेटो-
दृङ्मण्डलाद्दर्निशवृत्तयोगे ॥ २५६ ॥
दृङ्मण्डले ते स्युरिहोन्नतांशा
द्युरात्रके चोन्नतकालभागाः ।
एवं खमध्याच्च नतांशकाः स्यु-
र्मध्याह्नवृत्तान्नतकालभागाः ॥ २५७ ॥
समोन्मण्डलदृग्वृत्तकोणयाम्योत्तरादिगाः ।
शङ्कवो ये प्रसिद्धास्ते स्वस्वनाम्ना विजानता ॥ २५८ ॥
भुजोऽत्तज्या तथा लम्बज्यका कोटिस्त्रिभज्यका ।
कर्ण इत्यत्तजं जात्यमुक्तं क्षेत्रं सनातनम् ॥ २५९ ॥
भुजोऽक्षभा कोटिरकाङ्गुलो नाथ पलश्रुतिः ।
कर्ण इत्यत्तजं जात्यं क्षेत्रं तदपवर्त्तितम् ॥ २६० ॥
कुज्या भुजोऽपमज्या स्यात्कोटिरत्राऽग्रका श्रुतिः ।
उन्मण्डलनरो बाहुः कोटिरग्राग्रखण्डकम् ॥ २६१ ॥
अपमज्या श्रुतिस्तद्वद्बाहुरग्राग्रखण्डकम् ।
उन्मण्डलनरः कोटिः क्षितिज्या श्रवणस्तथा ॥ २६२ ॥
अग्रा भुजः कोटिरत्र समना तद्धृतिः श्रुतिः ।
तथापमज्यका बाहुः कोटिः कुज्योनतद्धृतिः ॥ २६३ ॥

समशङ्कुः श्रुतिस्तद्दृगाङ्कराग्राद्यखण्डकम् ।
कोटिरुद्वृत्तशङ्कूनः समशङ्कुः श्रुतिर्भवेत् ॥ २६४ ॥
कुज्योनतद्धृतिरित्थं जात्यान्यत्रभवानि वै ।
तथान्यान्यपि दृग्गोले भवन्त्यत्रावगम्यद्बुध ॥ २६५ ॥
दृङ्मण्डले गर्भकुजाल्लवा ये
खेटस्य तज्ज्यात्मक एव शङ्कुः ।
नान्याद्दतो लम्बनिभो यतः स्या-
ल्लम्बः कुगर्भाभिमुखो न चायम् ॥ २६६ ॥
मध्यं विनैवात्र च शङ्कवो यैः
स्वाज्ञानतो लम्बकद्दत्ररूपाः ।
प्रोक्ता न युक्ता किल तेथ शङ्कु-
र्यो दृक्कृद्दत्राच्च महान् स कोटिः ॥ २६७ ॥
पूर्वोदितं शङ्कुतलं च बाहु-
स्तद्युत्यजात्ये श्रवणो धृतिः स्यात् ।
यद्व्यासदलान्नगं हृतेर्य-
त्सूत्रं कलाख्यं तदिह प्रदिष्टम् ॥ २६८ ॥
उन्नतं द्युनिशमण्डले कुजा-
त्तज्ज्यकैव हृतिरेवमुद्धृतौ ।
कुज्यका चरगुणोन्मिता तथा
लम्बवन्नर इतीरितं न सत् ॥ २६९ ॥
अग्राग्रखण्डोनितसंयुतं य-
च्छङ्कोस्तलं स्याद्भुज एव सोत्र ।
कलाभिधं स्याच्छ्रवणस्य ताभ्यां
कोटिर्भवेद्याम्यदिग्वाम्यजात्ये ॥ २७० ॥

द्युज्यावशाद्याऽत्र कलाथ सैव
त्रिज्यावशात्सूत्रकसंज्ञया स्यात् ।
एवं बहून्यत्र भवानि तेषां
वियोगयोगात् प्रभवन्ति गोले ॥ २७१ ॥
त्रिज्यागुणे कर्णहृते वाङ्कोटी क्रमेण ते ।
पललम्बज्यके तज्जे चापे स्तः पललम्बकौ ॥ २७२ ॥
अथवा तज्ज्यके त्वत्र वाङ्कोटी मिथश्च ते ।
अन्याश्चभुजकोटिभ्यामनुपातात्सुबुद्धिना ॥ २७३ ॥
क्रान्तिज्यका कर्णगुणा कोट्या दोष्णा च संहृता ।
आद्यमग्रा द्वितीयं तु समशङ्कुः स सद्गुणः ॥ २७४ ॥
श्रुत्या कोट्या हृते लब्धं तद्धृतिः स्यादथान्यथा ।
अग्रा कर्णगुणा दोष्णा भक्ता वा तद्धृतिर्भवेत् ॥ २७५ ॥
अग्रातद्धृतिसंज्ञे ये कोट्या निघ्ने क्रमेण ते ।
दोष्णा कर्णेन संभक्ते समशङ्कुर्द्विधा भवेत् ॥ २७६ ॥
स च वाङ्गुणः कोट्या हृतः स्यादग्रकाथवा ।
तद्धृतेरूर्ध्वखण्डं यच्छ्रुतिघ्नं कोटिहृद्भवेत् ॥ २७७ ॥
समशङ्कुरथ क्रान्तिज्यका द्विष्ठा पृथक् पृथक् ।
भुजकोटिगुणा कोट्या दोष्णा च विहृता क्रमात् ॥ २७८ ॥
आद्यं कुज्या भवेत्खण्डमन्यदूर्ध्वं च तद्धृतेः ।
खण्डं स्याच्च तयोर्योगे तद्धृतिः स्याद्द्युरात्रजे ॥ २७९ ॥
भुजकोटिगुणे कुज्याऽपमज्ये कर्णभाजिते ।
अग्रान्त्यादिमखण्डे स्तस्तद्योगे वाग्रका भवेत् ॥ २८० ॥
क्रान्तिज्याग्रादिखण्डे ये भुजघ्ने चोद्धृते क्रमात् ।
श्रुत्या कोट्या च शङ्कुः स्यादुन्मण्डलगते रवौ ॥ २८१ ॥

कुज्याग्रकाग्रखण्डे ये कोट्या निघ्ने च भाजिते ।
श्रुत्या दोष्णा च लब्धं स्यादुन्मण्डलगतो नरः ॥ २८२ ॥
तदूनः समनैवात्र समशङ्कूर्ध्वखण्डकम् ।
भुजघ्नी श्रुतिहृच्चाग्रा कुज्या स्याच्च तदूनिता ॥ २८३ ॥
तद्धृतिस्तद्धृतेरूर्ध्वखण्डं स्याद्बहुधा बुधैः ।
गुणच्छेदविपर्यासादेवं ज्ञेयानि गोलके ॥ २८४ ॥
हृतिः कृता चास्वजजात्यकोट्या
निघ्नी हृता तच्छ्रवणेन लब्धम् ।
आद्यं नरो यष्टिरिह द्वितीय-
मेवं भुजघ्नी श्रवणेन भक्ता ॥ २८५ ॥
आद्यं भवेच्छङ्कुतलं द्वितीय-
मग्राग्रखण्डोनयुतं तलं स्यात् ।
आभ्यां गुणच्छेदविपर्ययाद्वा
हृतिः प्रसाध्या गणितप्रवीणैः ॥ २८६ ॥
दोः कोटिवर्गयोगस्य पदं कर्णो भवेत्तथा ।
दोः कर्णवर्गविवरान्मूलं कोटिस्तथा भुजः ॥ २८७ ॥
कोटिश्रवणयोर्वर्गवियोगपदसंमितः ।
इत्थं द्वाभ्यां तृतीयस्य ज्ञानमार्यैरुदाहृतम् ॥ २८८ ॥
दोः कोटिश्रवणानां च त्रयाणामप्यभावतः ।
यच्चासत्त्वात्मकं जात्यं नानुपातः क्वचित्ततः ॥ २८९ ॥
आद्यात्सनातनस्तेनाल्लाघवाद्दापवर्त्तितात् ।
कार्योऽनुपातः सर्वत्र व्यभिचारस्ततो नहि ॥ २९० ॥
मध्याह्नशङ्कोर्हृत्यन्त्ये तथा यष्टिश्च तत्त्रयम् ।
तन्नाम्नैवाहृतं चेष्टसंज्ञं यत्त्विष्टकालजम् ॥ २९१ ॥

मेषजूकाङ्गषट्कस्थे तीक्ष्णांशौ चलसंक्रते।
उदग्दक्षिणगोलौ स्तस्तद्वशेन युतोनिता॥ २९२॥
उद्वृत्तशङ्कुना यष्टिर्मध्यशङ्कुर्भवेत्तथा।
क्षितिज्यया द्युजीवा स्याद्धृतिस्त्रिज्या चरज्यया॥ २९३॥
अन्त्या स्याद्वा त्रिजीवाघ्नी द्युज्यया हृतिरन्त्यका।
अतो हृतिर्विपर्यासाज्ज्ञेया गुणकहारयोः॥ २९४॥
हृतिर्द्वादशनिघ्नो वा पलकर्णोद्धृता भवेत्।
दिनार्द्धशङ्कुरथवा सदुन्ना गुणितान्त्यका॥ २९५॥
सत्तचरज्यया भक्ता फलं मध्याह्नजो नरः।
एवं द्वादशलम्बज्यागुणिते दिनमौर्विके॥ २९६॥
पलकर्णत्रिजीवाप्ते क्रमाद्यष्टिस्तु मध्यजा।
ज्ञातस्ववाङ्कर्णाभ्यामपि व्यक्ता च सा भवेत्॥ २९७॥
अथापमांशोत्क्रमजीवयाघ्नी
लम्बांशजीवा त्रिभजीवयाप्ता।
लब्धोनिता सैव विलम्बभाग-
ज्यका भवेद्वा दिनमध्ययष्टिः॥ २९८॥
अत्र हृत्योक्तवत्साध्यो भुजः सा मध्यदृग्ज्यका।
यद्वा गोलक्रमाद्धीनयुक्ता तद्धृतिसञ्ज्ञया॥ २९९॥
हृतिः पलभया निघ्नो पलकर्णहृता च सा।
दिनार्द्धे दृग्ज्यकाथैवं नृचापोत्क्रमजीवया॥ ३००॥
ऊना त्रिज्यात्र दृग्ज्या स्यादतोऽप्येवं नरो भवेत्।
रविघ्नदृग्ज्यकात्रिज्ये शङ्कुभक्ते प्रभाश्रुती॥ ३०१॥
पलकर्णगुणा त्रिज्या हृत्याप्ता मध्यभाश्रुतिः।
चलार्कदोर्ज्यया भक्ताः खाभ्रऽश्वक्षितयः १७७० परः॥ ३०२॥

पलकर्णगुणः सोऽत्र पलच्छायोद्धृतो भवेत् ।
उदृत्तगरवेः छायाकर्णोऽथ सममण्डले ॥ ३०३ ॥
परोऽत्वच्छायया निघ्नः पलकर्णोद्धृतः श्रुतिः ।
उदृत्तार्कप्रभाकर्णस्त्वरज्याघ्नो हृतोऽन्यया ॥ ३०४ ॥
दिनार्द्धार्कप्रभाकर्णो यद्वोदृत्तसमश्रुती ।
कुज्ययाथ च तद्युत्या गुणिते हृतिभाजिते ॥ ३०५ ॥
दिनार्द्धार्कप्रभाकर्णौ क्रमाल्लब्धसमौ च तौ ।
द्युयातशेषयोरल्पमुन्नतं स्वकपालजम् ॥ ३०६ ॥
तथा नतं च तत्रस्थं तदूनं द्युदलं भवेत् ।
अथैवमिष्टकालेपि छायाकर्णस्य साधनम् ॥ ३०७ ॥
द्युरात्रोन्नतकालाच्च चरेणोनयुताज्ज्यका ।
गोलक्रमेण तत्सूत्रं भवेद्द्युज्यागुणं हृतम् ॥ ३०८ ॥
त्रिज्यया तत्कलासंज्ञं यद्वा सूत्रं कुजीवया ।
निघ्नं चरज्यया भक्तं कला सा रविसंगुणा ॥ ३०९ ॥
पलकर्णहृता चेष्टयष्टिः स्यादथ सूत्रकम् ।
सदुदृत्तनराभ्यस्तं भक्तं वा सच्चरज्यया ॥ ३१० ॥
इष्टयष्टिरथार्कस्य चरज्या गोलदिक् क्रमात् ।
सूत्रे युतोनिता सेष्टान्त्यकैवं क्षितिजीवया ॥ ३११ ॥
युतोनिता कला सेष्टहृतिरेवं स्वयष्टिका ।
इष्टोदृत्तनरेणात्र युतोनेष्टनरो भवेत् ॥ ३१२ ॥
नतोत्क्रमज्यका वाणस्तेन हीनान्त्यका भवेत् ।
इष्टान्त्यका तथा वाणो द्युज्याघ्नस्त्रिगुणोद्धृतः ॥ ३१३ ॥
लब्धाख्यं तच्च तेनोना हृतिरिष्टहृतिर्भवेत् ।
लब्धमर्कगुणं भक्तं पलश्रुत्योर्ध्वसंज्ञकम् ॥ ३१४ ॥

उद्वृत्तशङ्कुना निघ्नो वाणोवाग्रस्वरज्यया।
ऊर्ध्वसंज्ञं भवेत्तेन हीनो मध्यनरो भवेत् ॥ ३१५ ॥
इष्टशङ्कुर्नतादेवमिष्टान्त्याहृतिनोथवा।
दिनार्द्धशङ्कुवत्कार्यं स्वेष्टशङ्कोश्च साधनम् ॥ ३१६ ॥
तद्वच्छङ्कोश्च दृग्ज्या स्यात्ततः छाया च तच्छ्रुतिः।
यत्र क्वचिच्छुद्धिविधौ शोध्यं चेन्नैव शुध्यति ॥ ३१७ ॥
विलोमशोधनात्कार्यो विधिस्तत्रोक्तवद्बुधैः।
किं तु योगे वियोगश्च वियोगे तद्युतिस्तथा ॥ ३१८ ॥
नतं पश्चेन्दुनाडीतोधिकं स्याच्च तदा नतम्।
पश्चेन्दुहीनितं कृत्वा तत्क्रमज्या त्रिभज्यया ॥ ३१९ ॥
युक्ता नतोत्क्रमज्या स्यादथोद्वृत्तादिजो नरः।
याम्यगोले कुजाधोस्य दृग्यतन्नार्हता नहि ॥ ३२० ॥
अतः परानुपातार्थं योग्यत्वेनाहृतो बुधैः।
सममण्डलमप्राप्ते रवौ प्रागगणितेन यः ॥ ३२१ ॥
शङ्कुरुत्पद्यते सोपि स्यात्परानयनाय वै।
अक्षांशाभ्यधिका क्रान्तिर्यस्य तस्य द्युरात्रजम् ॥ ३२२ ॥
मण्डलं तदसंस्पृष्टं समवृत्तेन तत्र वै।
तद्धृतेः समशङ्कोर्यत्स्वरूपं तदिहोच्यते ॥ ३२३ ॥
स्वेष्टकाले द्युरात्रस्थहृतेर्गोलोर्ध्वगं नयेत्।
सूत्रं खमार्गवृद्धं च तथा प्राक्परसूत्रतः ॥ ३२४ ॥
कोटिवत्समवृत्तं च भित्त्वा गोलोर्ध्वगं च यत्।
हृतिसूत्रेण संलग्नं तत्सूत्रं समना भवेत् ॥ ३२५ ॥
सूत्रैक्याच्च तथा सूत्रं हृतेस्तद्धृतिसंज्ञकम्।
प्रोक्तमेवं द्युरात्रस्थाद्यत्र कुत्र स्थितार्कतः ॥ ३२६ ॥

नतासुजीवागुणिता द्युमौर्वी
त्रिष्ठा दिगंशोद्भवकोटिमौर्व्या ।
तथोपवृत्तार्द्धजविस्तरेण
तथा त्रिमौर्व्या विहृता क्रमेण ॥ ३२७ ॥

आद्यं तु दृग्वृत्तनतांशजीवा
द्वितीयकं स्यादुपवृत्तगा सा ।
तृतीयकं स्यात्फलवृत्तगा सा
ताभिर्विलोमेन नतासुदोर्ज्या ॥ ३२८ ॥

पूर्वापरस्वस्तिकसक्तवृत्तं
दृग्वृत्तनम्रांशगतं फलाख्यम् ।
फलाख्यवृत्तस्थनतांशकानां
या कोटिजीवा हरसंज्ञकः स्यात् ॥ ३२९ ॥

त्रिज्यागुणे हारहृते भुजाख्या-
पमज्यके तत्फलचापके ये ।
तदन्तरैक्यं समभिन्नदिक्के
दोःक्रान्तिमौर्व्योः स्युरिहाक्षभागाः ॥ ३३० ॥

हराहता दोःफलचापकोटि-
ज्यका त्रिभज्याविहृता नरः स्यात् ।
हराहता दोःफलचापदोर्ज्या
दृग्ज्याहृता दिग्लवशिञ्जिनी स्यात् ॥ ३३१ ॥

नृहारयोर्वर्गवियोगमूलं
वा दृग्ज्ययाप्तं त्रिगुणेन निघ्नम् ।
दिग्ज्या तया व्यस्तविधिक्रमेण
नतासवस्वापमभागकाः स्युः ॥ ३३२ ॥

अक्षांशकाः क्रान्तिफलस्य चापां-
शैः संस्कृता दोः फलचापभागाः ।
तदक्षयोर्व्यस्तसुसंस्कृतेस्य
चापांशकाः क्रान्तिफलस्य वेद्याः ॥ ३३३ ॥

भुजाख्यदृग्वृत्तनतांशजीवा-
वर्गान्तरात्खाच्च पदं नतज्या ।
फलाख्यवृत्ते त्रिभतत्फलाख्य-
नतांशजीवाहतिरुद्धृता स्यात् ॥ ३३४ ॥

दृग्जीवया दिग्लवकोटिमौर्वी
तच्चापहीना नवतिर्दिगंशाः ।
फलाख्यनम्रांशगुणत्रिमौर्व्यो-
र्घातः पृथक् संविहृतो द्युमौर्व्या ॥ ३३५ ॥

नतासुमौर्व्या च फले भवेतां
क्रमान्नतासुद्युगुणाह्वये ते ।
एवं हि दृङ्मण्डलनम्रभाग-
दिक्कोटिजीवाहतिरेव ताभ्याम् ॥ ३३६ ॥

पृथक्त्रिभ्यः संभजनाद्वराभ्यां
सिद्धिस्तयोरेव यथोक्तवत्स्यात् ।
इतोपवृत्तेपि नतज्यकात-
द्व्यासार्द्धयोराहतितोपि चैवम् ॥ ३३७ ॥

पूर्वं च कालनियमान्नरभेरिता या-
तामेव दिङ्नियमतः प्रवदामि भूयः ।
भूस्वस्वदिग्लवजदृग्भवमण्डलाभ-
दिग्भेदतोपि गणितैकसुसद्मरीत्या ॥ ३३८ ॥

दृङ्मण्डलं दिग्भवमण्डलं त-
द्याम्योत्तरं तत्र खमध्यतो ये ।
नाड्याङ्कयं यावदिहाङ्गभागा
यावच्च नाड्याङ्कयतः खगेन्द्रम् ॥ ३३९ ॥

ते चापमांशा द्युदलोक्तिवत्स्यु-
र्नतांशकाः खेटगताः खमध्यात् ।
खमध्यदेशाद्ग्रहमण्डलस्थं
दृङ्मण्डलं यन्निजगर्भभूजे ॥ ३४० ॥

प्राक्स्वस्तिकाद्यद्दिशि यैर्लवैः स्या-
त्तद्दिग्भवाः खेटदिगंशकास्ते ।
याम्योत्तरा वा सममण्डलाद्वो
दिगंशकास्ते किल याम्यसौम्याः ॥ ३४१ ॥

ते याम्यगोले तु सदैव याम्याः
सौम्ये तु याम्योत्तरगाः कुजोर्ध्वम् ।
यद्दिग्भवाः खेटकपालसंस्था
दिगंशकास्तत्खचरापरस्थे ॥ ३४२ ॥

कपालके तत्समदिग्लवाः स्यु-
स्तदन्यदिक्स्था नियतं खगोले ।
दिगंशकोटिज्यकया विनिघ्नी
लम्बांशजीवा त्रिभजीवयाप्ता ॥ ३४३ ॥

तच्चापभागोनितखाङ्कतुल्यः
परोथ तज्ज्याविहते विनिघ्न्यौ ।
त्रिभज्यया स्वाक्षलवापमांश-
ज्यके त्वभीष्टे भवतश्च तत्र ॥ ३४४ ॥

तच्चापतुल्याविह चेप्स्विताश्चा-
पमौ तु ताभ्यां द्युदले नतांशाः ।
तथोन्नतांशाश्च ततः प्रभा त-
त्कर्णोर्कशङ्कोर्विशतः पुरावत् ॥ ३४५ ॥
खाक्षांशकस्वापमभागदिक्का
इष्टाक्षभागापमभागकाः स्युः ।
सौम्याग्रकाल्पस्वदिगंशमौर्व्यां
परा यदा स्वापमसंमितः स्यात् ॥ ३४६ ॥
यदाथवाग्राधिकदिग्लवज्या
तदैकभा साधनमुक्तवत्स्यात् ।
अतोन्यथेष्टाक्षलवाः कृता ये
तदूनखाष्टेन्दुमितास्तु येऽन्त्याः ॥ ३४७ ॥
ताभ्यां यथोक्तानयनादभीष्टा-
त्कृतापमादेव हि भाद्वयं स्यात् ।
कुजोर्ध्वमित्थं विपरीतोत्तरे तु
विचार्यमार्यैर्यमसौम्यगोले ॥ ३४८ ॥
सौम्ये स्वगोले यदि दिग्लवज्या-
ग्रकाल्पका स्वापमभागकेषु ।
स्वाक्षाल्पकेषूदितमार्यवर्यैः
छायाद्वयं तत्र कपालभेदात् ॥ ३४९ ॥
एवं हि तत्रैव यदाक्षभागाऽ-
नल्पास्तु ते स्वापमभागकाः स्युः ।
तदा भवेदेककपाल एव
छायाद्वयं कालविभेदसिद्धम् ॥ ३५० ॥

इत्थं कपालद्वयभाप्रसङ्ग
या स्यादपृद्वाख्यवशात्प्रभा च ।
सा याम्यदिग्दिग्वलवखेचरस्य
या तद्विपृद्वाख्यवशाच्च सा स्यात् ॥ ३५१ ॥
भा सौम्यदिग्दिग्वलवखेचरस्य
कृतैकदृङ्मण्डलदिङ्नरोत्था ।
द्युरात्रदृङ्मण्डलजद्वियोगा-
दित्थं खगोले सुधिया विचार्यम् ॥ ३५२ ॥
एवं यदा चैककपाल एव छायाद्वयं साधितमस्ति तत्र ।
या स्याद्दिनार्द्धान्निकटेऽथ तस्य भवेदपृद्वाख्यसमुद्भवा भा ॥ ३५३ ॥
दूरस्थितस्यात्र भवेद्विपृद्वाख्यजा प्रभा तद्गणितं पुरोक्तम् ।
पराल्पकखापमभागकेषु प्रोक्तं त्विदं नैव तयोः समत्वे ॥ ३५४ ॥
दिग्ज्याग्रया स्यात्क्षितिजे समैव
ततस्तदल्पाथ ततो विवृद्ध्या ।
समाग्रकाङ्काभ्यधिका च सौम्ये
गोले पलात्खापमकाधिकत्वे ॥ ३५५ ॥
एवं दिनार्द्धावधिवैपरीत्या-
दूर्ध्वं दिनार्द्धात्तु तदेव बोध्यम् ।
खापक्रमस्याक्षलवाल्पकास्ते
पराग्रका नैव भवन्ति गोले ॥ ३५६ ॥
अल्पाधिकोऽस्यादपमस्तदा स्या-
त्सौम्ये क्रमाद्व्द्येककपालजा भा ।
सदोत्तराग्राल्पकदिग्ज्यकाया-
माद्यैः कृतं भाद्वितयं स्वतन्त्रैः ॥ ३५७ ॥

अग्रात्पकायामपि दिग्ज्यकाया-
मेकप्रभाया अपि सम्भवः स्यात् ।
यदा परः स्वापमभागतुल्य-
स्तदा खनन्दप्रमिता अभीष्टाः ॥ ३५८ ॥
क्रान्त्यंशकास्तत्र तु येऽक्षभागा
इष्टाश्च ते शङ्कुलवास्तदूनाः ।
खाङ्का नतांशा अथ वा पराख्य-
स्वाक्षज्ययोर्वर्गवियोगमूलम् ॥ ३५९ ॥
त्रिज्यागुणं संविहृतं पराख्य-
ज्यया नतज्या च ततः प्रभा स्यात् ।
परस्वतत्क्रान्तिपलांशकानां
साम्ये तु शङ्कोरिह नैव भा स्यात् ॥ ३६० ॥
अक्षाद्यथैवाभ्यधिकः पराख्या-
पमस्तथा सा परिवर्द्धते भा ।
भेदे समत्वेप्यपमाक्षयोर्भा-
भावोप्यभावः सुधियोह्य एवम् ॥ ३६१ ॥
खेचरापमलवाः परभागे-
भ्यः कथं चिदधिका न भवेयुः ।
चेदयोग्यमपि पृच्छति तत्र
दुर्मतिश्च खलु तत्खिलमूह्यम् ॥ ३६२ ॥
यद्भास्करप्रभृतिभिः स्वकृतौ किलोक्तं
दिग्भाद्वयं व्यभिचरत्युदगग्रकातः ।
दिग्ज्याल्पकत्वनियमेपि खनन्दभागै-
रिष्टापमे तदिह दिग्द्युनिशैकयोगात् ॥ ३६३ ॥

यच्चोक्तं हि नरभादिनयं तै-
स्तद्द्वयोर्यदि समत्वमिहास्ति ।
सत्तदस्ति हि कपालकभेदा-
न्नान्यथात्र बुध किं नु समैक्ता ॥ ३६४ ॥
सैव भा भवति चैककपाले
येन तत्र नरभैकमिता स्यात् ।
एकदृग्द्युनिशमण्डलजैक-
योगतो द्वियुतितः किल भे स्तः ॥ ३६५ ॥
एकद्विदिग्भानयनं कुजोर्ध्वं
दृग्वृत्तदिक्स्थं निजसौम्यगोले ।
उदीरितं तत्किल याम्यगोले
सञ्जायते स्वक्षितिजादधस्तात् ॥ ३६६ ॥
यच्चैकदिग्भानयनं हि याम्ये
कुजोर्ध्वमग्राधिकदिग्ज्यकायाम् ।
तत्सौम्यगोले क्षितिजादधस्ता-
दथोपपत्तिं शृणु गोलसंस्थाम् ॥ ३६७ ॥

खमध्यं गोलसन्धिं प्रकल्प्य दृग्वृत्तयाम्योत्तरवृत्ते नाडीवृत्तक्रान्तिवृत्ते कल्प्ये क्षितिजं त्वयनवृत्तम् तत्र तयोरन्तरं दिगंशकोटिमितं परक्रान्तिः स्यात्। दृग्वृत्तनाडीवृत्तसंपातान्नवत्यंशैर्वृत्तं ध्रुवासक्तमिष्टवृत्तम्। तत्क्षितिजसंपातौ ध्रुवौ इष्टवृत्ते ध्रुवादृग्वृत्तावधीष्टक्रान्तिर्याम्योत्तरवृत्ते खमध्याद्ध्रुवावधि लम्बांशाः स्वेष्टांशास्तत्रेष्टक्रान्त्यंशान् प्रसाध्य तत्कोट्यंशाः कार्यास्ते दृग्वृत्तनाडीवृत्तयोगरूपगोलसन्धेस्तद्वृत्तयोः क्रमेण क्रान्तिनाडीवृत्तरूपयोरन्तरगाः परक्रान्तिरूपा अयनाभिधे स्वेष्टवृत्ते। अथ दृ-

वृत्ते तद्गोलसन्धेः खमध्यं यावदिष्टान्त्यांशाः शेषांशाः ध्रुवौ तु ध्रुवौ। याम्योत्तरवृत्ते खमध्यान्नाडीवृत्तावधि स्वाक्षांशास्तथा ग्रहसम्बन्धिध्रुवद्वयोत्थवृत्ते नाडीदृग्वृत्तयोरन्तरं स्वापमांशा अत्रेष्टक्रान्त्यंशा दृग्वृत्तस्थतत्स्थेत्रांशा एव। तत्र स्वाक्षापमौ भुजौ तदिष्टाक्षापमौ कर्णौ नाडीवृत्ते तत्कोटिश्चेति चापजात्यद्वयमक्षक्रान्तिसम्बन्धात्। तृतीयमनन्तरोक्तक्रान्तिपरक्रान्तिसम्बन्धि चापजात्यं चेति साजात्यात्तदनुपाताज्जात्यद्वयभुजद्वारा तत्कर्णरूपेष्टाक्षापमज्ञानं सुबोधम्। स्वाक्षाल्पस्वक्रान्तौ क्रान्तिक्षेत्रमक्षक्षेत्रान्तर्गतं अधिके त्वक्षक्षेत्रं क्रान्तिक्षेत्रान्तर्गतम्। स्वाक्षापमयोर्दिगैक्ये त्वक्षक्षेत्रकोणाद्विषुवस्थिताद्बहिःस्थं क्रान्तिक्षेत्रं तत्कोणलग्नं स्यात्। विषुवद्दृग्वृत्तैक्यद्वयान्तः दृग्वृत्ते भार्द्धांशास्तदैक्यान्नवत्यंशान्तरे तद्वृत्तयोः परतुल्यमन्तरं परमम्। उत्तरगोलेऽल्पकदिग्ज्यायां कुजोर्ध्वगतग्रहस्य दिगंशानां सौम्यत्वे शोधिता याम्यत्वे त्वशोधिता इष्टाक्षांशाः स्युरिति स्पष्टमेव दृग्गोलेऽल्पकक्रान्तौ। तत्र दृग्वृत्तमहोरात्रवृत्ते स्थानद्वये कपालभेदेन संलग्नमिति छायाद्वयं सुप्रसिद्धम्। अधिके पराल्पकस्वापमे तच्चैककपाल एव स्थानद्वये लग्नमिति छायाद्वयं तत्रापि सूक्ष्मज्ञैकगम्यम्। परस्वरूपे स्वापमे तु तत्रस्थदृग्वृत्तदेशगतग्रहस्याहोरात्रवृत्तं तत्रैव संलग्नं नान्यत्रेति छायैका प्रत्यक्षप्रमाणावगताऽग्राल्पकदिग्ज्यायां। एतेन गोलस्वरूपमज्ञात्वैव बलात्तत्र छायाद्वयप्रकारं वदन्तो नितरां निरस्ताः शेषवासनाऽऽकरत एव स्फुटेत्यलं पल्लवितेन॥

दृग्जीवया संगुणिताच दिग्ज्या

त्रिज्योद्धृता लब्धमितो भुजः स्यात्।

छायागुणा तच्छ्रवणोद्धृता वा
दिग्ज्या भुजः सा भुजतो विलोमात्॥३६८ ॥
त्रिभज्याहृताकाग्रका कर्णनिघ्नी
भवेत्कर्णवृत्ताग्रका व्यस्तगोला ।
पलच्छायया सौम्यया संस्कृता स्या-
द्भुजोथोत्तरे भाग्रके सौम्यगोले ॥ ३६९ ॥
भुजः कर्णवृत्ताग्रयाढ्योऽन्यदासौ
वियुक्तोऽक्षभा स्यात्तया वा वियुक्तः ।
भुजः सौम्यभाग्रेऽन्यदाढ्यस्त्रिभज्या-
हतः कर्णभक्तोग्रका चाऽपमोऽतः ॥ ३७० ॥
कर्णाग्रकासिद्धभुजस्य वर्गं
छायाकृतेः प्रोह्यपदं ततः स्यात् ।
पूर्वापरा कोटिरिहाथ खेट-
कपालके पश्चिमपूर्वसञ्ज्ञे ॥ ३७१ ॥
अथात्र वृत्तं समभूमिपृष्ठे
कार्यं तु तच्चक्रकलाङ्कितं च ।
तत्केन्द्रगालम्बनिभार्कशङ्कोः
छायाग्रकं यत्र विशत्यपैति ॥ ३७२ ॥
वृत्ते परेन्द्र्यौ भवतो दिशौ च
तत्कालदृग्ज्याग्रगतौ भुजौ यौ ।
छायोत्थकर्णेन गुणौ विभक्तौ
छायाप्रमाणेन तयोस्तु चापे ॥ ३७३ ॥
एकान्यदिक्के तु तदन्तरैक्य-
कलाभिरैन्द्री चलितायनांशा ।

वृत्तौ स्फुटा स्यात् खलु गोलयुक्त्या
तन्मत्स्यतः स्यादिह याम्यसौम्या ॥ ३७४ ॥
मेषार्कसन्दर्शनतो दिगंशा-
न्तरेऽपि पूर्वापरसूत्रमेकम् ।
यद्वा ध्रुवादेव सदोत्तरा दिग्
ज्ञेयान्यदिग्ज्ञानमतः सुबोधम् ॥ ३७५ ॥




अथैकभागादपि तत्समायां
भूमौ स्वदिग्बाहुमितां शलाकाम् ।
कोटीमितां शङ्कुतलात्तथान्यां
स्वदिग्भवां यत्र तदग्रमैक्यम् ॥ ३७६ ॥
दिङ्मध्यरूपं परिकल्प्य तस्मा-
त्कोटिस्तु पूर्वापरसूत्ररूपा ।
भुजस्तु याम्योत्तरसूत्ररूप-
स्तत्सर्वदिग्ज्ञानमतः सुबोधम् ॥ ३७७ ॥
सच्चुम्बकादेव सुशिल्पविज्ञाः
कुर्वन्ति दिग्ज्ञानमिहान्यथैव ।
पूर्वापरा यात्र कृता प्रकारै-
र्ज्ञेया बुधैः सा सममण्डलीया ॥ ३७८ ॥
अर्कोदयास्तजे पूर्वापरे तेऽर्घ्यादिषूदिते ।
अन्यत्राल्पान्तरात्केचिदुदङ्मेरुं ततो जगुः ॥ ३७९ ॥
आद्यप्रकारादयनाख्यसन्धे-
रासन्नकाले यदि दिक् प्रसाध्या ।
स्वल्पान्तरान्नानुपपत्तिरत्र
दिक्साधने संव्यवहारहेतोः ॥ ३८० ॥

बिम्बोर्ध्वदेशान्तरभावशेन
दिक्साधनं यैर्विहितं न सत्तत् ।
बिम्बार्द्धलिप्तामितहङ्गतेन
दिनार्द्धतः प्रक्परतो ग्रहेन्द्रे ॥ ३८१ ॥
अभाव एवास्ति नृभाद्वयस्य
किंचिद्दिनार्द्धेस्ति च खेटदिक्स्था ।
तद्दीतितो भैवमिहैकमध्या-
त्पूर्वापरं भोपचयो न यस्मात् ॥ ३८२ ॥
दिक्वृत्तसंपातगतस्य शङ्कोः
छायाग्रपूर्वापरवृत्तमध्यम् ।
दोर्दोःप्रभावर्गवियोगमूलं
कोटिर्नरात्प्राच्यपरा ततः स्यात् ॥ ३८३ ॥
कर्णमर्कनरभाकृतियोगा-
न्मूलमाङ्करथ भात्र विलोमात् ।
भूमिपृष्ठगनरेण विभक्ता
दृग्ज्यका रविगुणा स्फुटभा वा ॥ ३८४ ॥
यत्स्वात्कुपृष्ठान्नरदृष्टिचिह्ना-
द्यावद्भवेद्भिम्बजगोलकेन्द्रम् ।
खगस्य तद्गर्भजदृष्टिवृत्तं
स्पृष्ट्वैव तद्गोलजपृष्ठमग्रे ॥ ३८५ ॥
यद्गन्तुकामन्तदिवास्ति पृष्ठ-
दृक्वृत्तकं ते सुधिया प्रसाध्ये ।
स्वल्पान्तरादा व्यवहारयोग्ये
साध्ये कुगर्भाभनृदृष्टिचिह्नात् ॥ ३८६ ॥

दृङ्मण्डले गर्भकुजात्खगस्यो-
न्नतांशकाः खान्नतभागकाश्च ।
ये तज्ज्यके योजनकर्णनिघ्न्यौ
त्रिज्योद्धृते ते किल योजनाद्ये ॥ ३८७ ॥

स्वशङ्कुदृग्ज्ये भवतस्तु तत्र
शङ्कौ कुखण्डं प्रविशोध्य शेषम् ।
पृष्ठाख्यशङ्कुस्त्वथ दृग्ज्यकात-
त्कृत्योर्युतेर्मूलमितं भवेत्तत् ॥ ३८८ ॥

गर्भीयदृक्सूत्रमथास्य वर्गे
स्वयोजनव्यासदलस्य वर्गं ।
विशोध्य मूलं किल पृष्ठजं तद्
दृक्सूत्रकं गोलविदावगम्यम् ॥ ३८९ ॥

बाणो यदा स्यात्खचरस्य तस्य
विम्बोद्भवैरेव नतोन्नतांशैः ।
साध्यं त्विदं दृग्भवसूत्रकं त-
त्सर्वत्र खे स्याद्गणितोपयुक्तम् ॥ ३९० ॥

ऊर्ध्वाधरा तथा तिर्यग्रेखा चक्रस्य मध्यगा ।
कार्या चक्राङ्घ्रयस्ताभ्यां चत्वारः स्युः समा इह ॥ ३९१ ॥

तदेकाङ्घ्रिस्वरूपाच्च यन्त्रादेव यथा भवेत् ।
ज्ञानं दिग्देशकालानां तथा सूक्ष्मं वदाम्यहम् ॥ ३९२ ॥

ग्रन्थजीवार्द्धखण्डानि त्रिंशत्त्रिज्याभवान्यतः ।
खाग्नित्रिज्याप्रमाणेन लाघवाद्यन्त्रमादृतम् ॥ ३९३ ॥

यन्त्रं त्रिकोणकं जात्यं तस्य व्यासार्द्धसंमितौ ।
भुजौ तच्चक्रनेम्यङ्घ्रिरूपो बाहुस्तृतीयकः ॥ ३९४ ॥

तस्यैकः समकोणोऽस्ति तदन्यौ विषमौ किल ।
समकोणे चक्रकेन्द्रं विषमैको भवेत्कुजम् ॥ ३९५ ॥
तथान्यः स्यात्खमध्यं तु कुजकेन्द्रान्तरेऽस्ति भूः ।
तथा खमध्यकेन्द्रान्तः खरेखा नेमिगं तथा ॥ ३९६ ॥
वृत्तत्रयवशात्कुर्यात्कोष्ठकद्वितयं बुधः ।
कुजात्खाङ्कलवा नेम्यां तथा खात्तिथिनाडिकाः ॥ ३९७ ॥
समास्त्रिंशद्विभागास्य कार्या भूमेस्ततो ज्यकाः ।
खसंज्ञरेखिकातुल्यान्तराला नेमिवृत्तगाः ॥ ३९८ ॥
त्रिंशन्मिताः कुजारभ्य खान्तं यन्त्रे कृता बुधैः ।
अष्टादशी ज्यका भूजाज्ज्यान्तरालाङ्गुलाङ्किता ॥ ३९९ ॥
तस्यां कुतोऽसभातुल्याङ्गुलाग्रे केन्द्रतोऽस्ति यत् ।
लम्बसूत्रं च तन्नेम्यां यत्र स्पृष्टं ततः कुजम् ॥ ४०० ॥
यावदस्रांशकास्तद्वत्खं यावल्लम्बभागकाः ।
तयोः क्रमोत्क्रमज्ये च ज्ञेये येषां क्रमज्यका ॥ ४०१ ॥
अभीष्टा ते लवा नेम्यां देयाः खात्तत्र या ज्यका ।
भूमौ तत्केन्द्रयोरन्तः क्रमज्याङ्गुलसंमिता ॥ ४०२ ॥
एवमिष्टोत्क्रमज्या चेत्कुजान्नेम्यां च ते लवाः ।
देयास्तदग्रगा जीवा तत्कुजान्तोऽङ्गुलानि कौ ॥ ४०३ ॥
उत्क्रमज्या भवेदत्र यदि साध्या स्वदेशजा ।
परकान्त्युत्क्रमज्याघ्नी लम्बज्या त्रिज्ययोद्धृता ॥ ४०४ ॥
फलोनलम्बमौर्वी स्यात्खस्यानेत्यल्पयष्टिका ।
खदिग्लवोनलम्बज्या स्थूला वात्यल्पयष्टिका ॥ ४०५ ॥
अत्यल्पया तया भाज्याः खखाङ्काः १०० स्यात्पराधिकम् ।
तदङ्गुलैश्च सा दीर्घा मुखेद्व्यङ्गुलविस्तृता ॥ ४०६ ॥

अग्रे त्वङ्गुलविस्तारा कार्या केन्द्राच्च लम्बवत् ।
यथा तदेकपार्श्वं स्यात्तथा केन्द्रे नियोजयेत् ॥ ४०७ ॥
ज्यान्तराङ्गुलकाङ्कैश्च केन्द्रादङ्क्याथ सा बुधैः ।
नेम्यां कुजात्पलांशाग्रस्थितपट्ट्यां च केन्द्रतः ॥ ४०८ ॥
यन्त्रद्युज्यां प्रदत्वा तज्ज्याग्रे नेम्यां द्युपट्टिका ।
ज्ञेयाथ सेषुभागार्काङ्गुलैर्वृत्तं च केन्द्रतः ॥ ४०९ ॥
अपमाख्यं लिखेत्तस्मिन्प्रोक्तपट्टी भुजाग्रगा ।
लग्ना यत्रास्ति तज्ज्याग्रे नेम्यां खादपमांशकाः ॥ ४१० ॥
पलभा स्वीयषष्ट्यंशयुता कुज्या भवेत्परा ।
केन्द्राद्भूमौ च तां दत्वा तज्जीवा यत्र संस्पृशेत् ॥ ४११ ॥
कुजान्नेमिगतक्रान्त्यंशकस्थां पट्टिकां ततः ।
केन्द्रं यावच्च तत्पट्ट्यां स्वेष्टा परचरज्यका ॥ ४१२ ॥
कृतायनांशबाह्वग्रस्थितपट्ट्यां पुनश्च तत् ।
चिह्नं परचरज्याया यत्र तज्ज्याग्रखान्तरे ॥ ४१३ ॥
नेम्यामिष्टचरांशाः स्युर्नाडश्च ज्याङ्गुलानि तु ।
सौम्यगोले चरं कल्प्यं खाद्बहिःस्थं च दक्षिणे ॥ ४१४ ॥
तथा तदन्तरे नेम्यां तत्र ज्ञेयं चराग्रकम् ।
चलार्काऽऽद्यपदस्यांशा नेम्यां खादुत्क्रमादथ ॥ ४१५ ॥
द्वितीयपदभागा ये ते क्रमात्कुजतस्तथा ।
तृतीयजाः खतस्तुर्योद्भवा देयाः कुजात्तथा ॥ ४१६ ॥
एवं भुजाग्रकं नेम्यां गणितार्थं च खाद्भवेत् ।
धातुजं दारुजं वा यद्यन्त्रं बुद्धिमता कृतम् ॥ ४१७ ॥
तस्य केन्द्रकुजोर्ध्वस्थे रन्ध्रे कार्ये समान्तरे ।
कुजरन्ध्रस्य दृष्ट्वैव केन्द्ररन्ध्रगतं ग्रहम् ॥ ४१८ ॥

खस्थं विध्वाथ तद्यन्त्रं कार्यं दृग्वृत्तवद्बुधैः ।
अथवा केन्द्ररन्ध्रेण क्ष्माजरन्ध्रं विशेद्यथा ॥ ४१९ ॥
अर्कतेजस्तथा यन्त्रं धार्यमर्कमुखं सदा ।
अर्कोदये भवेत्खस्थं लम्बसूत्रं यथायथा ॥ ४२० ॥
वियत्यर्ककुजस्थानादुन्नतस्य तथातथा ।
यन्त्रे खतस्य तत्सूत्रं नेम्यंशैस्त्वलितं भवेत् ॥ ४२१ ॥
अतः खादुन्नतांशास्य ज्ञेया भूजान्नतांशकाः ।
तज्ज्यके शङ्कुदृग्ज्ये च यन्त्रे दृग्वृत्तवत्स्थिते ॥ ४२२ ॥
एवं नतांशजीवा या द्युपट्टीं यत्र संस्पृशेत् ।
गोलक्रमाच्चरज्योनयुतः कार्योङ्ककस्तु सः ॥ ४२३ ॥
तदग्रतुल्यभूज्याग्रं यावन्नेम्यां चराग्रतः ।
उन्नता नाडिका ज्ञेयाः कुजाच्छेषा नतास्च ताः ॥ ४२४ ॥
चरज्योनयुता कार्या विलोमाख्याथ तज्ज्यका ।
द्युपट्टीस्थतदङ्कज्या रेखा सैव नतज्यका ॥ ४२५ ॥
दृग्वृत्तगा तदग्रेथ कल्पयेन्नेमिगं रविम् ।
ततः खं स्वोन्नतांशाः स्युः कुजं यावन्नतांशकाः ॥ ४२६ ॥
नेम्यां कुजात्पलांशाग्रस्थितपट्यामितज्यका ।
यत्र स्पृष्टा ततः केन्द्रान्तरे स्वेष्टहृतिर्भवेत् ॥ ४२७ ॥
एवं तत्पट्टिकायां खात् क्रान्त्यंशाग्रज्यका स्पृशेत् ।
यत्र तत्केन्द्रयोरन्तः स्वाग्रा स्यादथ पट्टिका ॥ ४२८ ॥
रविचिह्नगता कार्या तस्यामष्टादशी ज्यका ।
यत्र तस्माद्ध्रुवं यावच्छाया केन्द्रं तु तच्छ्रुतिः ॥ ४२९ ॥
एवं खात् पलभागाग्रस्थितपट्यां च खापमात् ।
ज्यका यत्र भवेच्छिन्ना तत्केन्द्रान्तः समो नरः ॥ ४३० ॥

भूमिस्थायाश्च तत्पट्ट्याः छिन्नदेशज्यकाग्रगम् ।
समवृत्तगसूर्यस्य चिह्नं नेम्यां प्रकल्पयेत् ॥ ४३१ ॥
शङ्कुभाकर्णनाड्यादि ततः सर्वं यथोक्तवत् ।
एवं खात्समशङ्क्वग्रे पट्टी स्थाप्यापमज्यका ॥ ४३२ ॥
खागता तां स्पृशेद्यत्र तत्केन्द्रान्तः पलज्यका ।
तत्पट्ट्यामेव या केन्द्रात्पलज्याग्रगता ज्यका ॥ ४३३ ॥
यदग्रखान्तरे नेम्यां क्रान्त्यंशा वा स्वगोलजाः ।
यद्वा सदोदितर्क्षं च परमं सन्नतोन्नतम् ॥ ४३४ ॥
द्विधा विध्वोन्नतांशैक्यदलं यत्ते पलांशकाः ।
एवं मध्यनतांशानां क्रान्त्यक्षाभ्यां भवन्ति च ॥ ४३५ ॥
व्यस्तसंस्कारतोऽक्षांशाः क्रान्त्यंशाश्च क्रमाद् ध्रुवम् ।
एवं खतः क्रान्तिभागान्तरे संस्थज्यया स्पृशेत् ॥ ४३६ ॥
जिनज्यामण्डलं यत्र तत्र पट्टीं न्यसेत्खतः ।
यावत्पट्ट्यग्रकं नेम्यां चलार्कस्य भुजांशकाः ॥ ४३७ ॥
रसर्त्तुज्यां २७।२४ परां कुज्यां प्रकल्प्य चरकर्मणा ।
ये च राशित्रयोत्पन्नाः स्वस्वपूर्वविशोधिताः ॥ ४३८ ॥
व्यत्रोदयाः क्रमान्मेषात्स्युः कीटाद्युत्क्रमाच्च ते ।
उक्तवच्चरखण्डैस्तैर्हीना युक्ताः क्रमोत्क्रमैः ॥ ४३९ ॥
स्वोदया मेषषट्कस्य जूकान्ते स्युर्विलोमतः ।
पृष्ठे यन्त्रस्य नेम्यां तु कृत्वा वृत्ताङ्घ्रिपञ्चकम् ॥ ४४० ॥
उदयार्थं च संसाध्यं कोष्ठकानां चतुष्टयम् ।
आद्ये खवह्निघटिका द्वितीये तत्पलानि वै ॥ ४४१ ॥
तृतीये मेषषट्कस्य विभागस्यैकभागके ।
त्रिंशत्तवास्तुर्ये तु तन्नामानि क्रमोत्क्रमात् ॥ ४४२ ॥

चलार्कराशिभागेभ्योभीष्टकालाग्रगं भवेत्।
चललग्नं चलांशानां व्यस्तसंस्कारतोङ्ककम् ॥ ४४३ ॥
चललग्नार्कयोर्मध्ये कालोप्येवं स्फुटो भवेत्।
विवाणश्चं कुजोर्ध्वं सद्दिध्वा यन्त्रान्नतांशकान् ॥ ४४४ ॥
ज्ञात्वा तत्रार्कवत्साध्यं द्युगतं हीनयुक् च तत्।
भध्रुवार्कास्तलग्नान्तःकालेनोनाधिके ध्रुवे ॥ ४४५ ॥
रात्रियातं भवेज्ज्ञेयं चैवमन्यदपीह वै।
सौम्यगोले ज्यकालपत्वात्पट्टीं नैव स्पृशेत्तदा ॥ ४४६ ॥
तत्र ज्यकानुसारं वा सूत्रं पट्यां च योजयेत्।
षडंशाधिकमत्रैकाङ्गुलं १।१० स्याच्चिह्नमर्कजम् ॥ ४४७ ॥
विल्यंशं चिह्नमत्रेन्दोरङ्गुलत्रितयं ३।४० सदा।
अथ खात्पट्टिकां धृत्वेनेन्दोः केन्द्रभुजान्तरे ॥ ४४८ ॥
तस्यां केन्द्रात्स्वस्वचिह्नसत्तज्ज्याग्राच्च खावधि।
नेम्यां मन्दफलं ज्ञेयं तौ तत्संस्कारतः स्फुटौ ॥ ४४९ ॥
अङ्घ्रियन्त्रेऽत्र पाताढ्यचन्द्रजा या भुजज्यका।
नवघ्नीन्दुशरः स्थूलः स्यात्सपातविधोर्दिशि ॥ ४५० ॥
अत्र दोःकोटिकर्णानां नामव्यत्यासतो मिथः।
गणिते फलसाम्यं स्यात्तथा कार्यं विचक्षणैः ॥ ४५१ ॥
अनुपाते प्रमाणं तत्फलमिच्छा च तत्र वै।
त्रिज्यातुल्यं प्रमाणं चेदिच्छावृत्तं च केन्द्रतः ॥ ४५२ ॥
लिखेल्लभ्यं ततो नेम्यां दत्त्वा पट्टीं न्यसेत्खतः।
वृत्तं पट्यां च संलग्नं तज्ज्यकाग्रखरेखयोः ॥ ४५३ ॥
मध्ये त्विच्छाफलं ज्ञेयमथवा केन्द्रतो लिखेत्।
लभ्यवृत्तं च खादिच्छाग्रगपट्यां तु तद्युतम् ॥ ४५४ ॥

यत्र तत्र ज्यकाग्राच्च खरेखावधि तद्भवेत् ।
इच्छाफलं यदा लभ्येच्छयोस्त्रिज्या भवेत्तदा ॥ ४५५ ॥
खरेखातः प्रमाणाग्रे नेम्यां पट्टीं न्यसेत्ततः ।
भूमौ केन्द्रात्त्रिभज्यान्यं दत्वा तज्ज्याथ पट्टिकाम् ॥ ४५६ ॥
यत्र तत्केन्द्रयोरन्तः पट्यामिच्छाफलं भवेत् ।
यदा कुत्रापि न त्रिज्या तदा त्रिज्याप्रमाणतः ॥ ४५७ ॥
लभ्यमिच्छां च वा कृत्वा तदेकं केन्द्रतोऽङ्कयेत् ।
पट्यामथ तदन्याग्रे पट्टीं संस्थाप्य खात्ततः ॥ ४५८ ॥
त्रिज्याप्रमाणतस्त्वाङ्क्यात्प्राग्वदिच्छाफलं भवेत् ।
अथ यन्त्रोन्नतांशानां वैचित्र्यं तदिहोच्यते ॥ ४५९ ॥
यथा खमध्यात्क्षकुजं तथैव प्रत्युन्नतांशोर्ध्वगमण्डलानि ।
द्वयोर्द्वयोर्मध्यगतं द्युरात्रखण्डं स चैकोन्नतभागकालः ॥४६० ॥
तिर्यक्स्थितत्वे स महान् ऋजुत्वेऽ-
ल्पकः कुजासन्नगतो यथा स्यात् ।
कालस्तथा कालजखण्डके त-
दृजुत्वमेवं निकटे दिनार्द्धात् ॥ ४६१ ॥



तिर्यक्स्थितत्वं भवतीति गोले
प्रत्यक्षसिद्धं किल तेन भानोः ।
यन्त्रोन्नतांशप्रभवः स कालो-
महान्दिनार्द्धान्निकटे कुजाच्च ॥ ४६२ ॥
तथाल्पकः स्यान्निकटे सदैव
सर्वत्र देशे दिवि दृश्यतेऽह्नि ।
सदा निरक्षे विषुवत्स्थितार्को-
न्नतांशकालः सम एव वेद्यः ॥ ४६३ ॥

सिद्धान्तज्ञैः क्षेत्रगोलप्रवीणै-
र्व्यक्ताव्यक्तप्रोक्तयुक्तिप्रकारैः ।
अत्रावश्यं ज्ञायते वासनाद्भि-
र्यन्त्रे सूक्ष्मे सा मया नोदितास्मात् ॥ ४९४ ॥
दिग्देशकालोद्भवजात्यजातै-
र्यश्चानुपातैर्गणितं सुसूक्ष्मम् ।
तदद्भिर्यन्त्रान्मयका निरुक्त-
मपूर्वमाश्चर्यकरं नृणां च ॥ ४९५ ॥
कालदिग्देशजं किंचिद्गणितं तद्विवोदितम् ।
तत्सारमखिलं वक्ष्ये ग्रन्थालङ्करणेऽग्रतः ॥ ४९६ ॥
इति श्रीकमलाकरविरचिते सिद्धान्ततत्त्वविवेके त्रिप्रश्नाधिकारः ।

अथ बिम्बाधिकारः ॥

अविदित्वैव यद्विम्बस्वरूपं गणितं न सत् ।
सूक्ष्मं सवासनं बिम्बविचारं कथयाम्यतः ॥ १ ॥
ग्रहर्क्षदेहगोला ये ते तु तद्विम्बगोलकाः ।
आर्यैस्तद्व्याससमानं तु प्रोक्तं योजनमण्डलम् ॥ २ ॥
तेजसां गोलकः सूर्यो ग्रहर्क्षाण्यम्बुगोलकाः ।
प्रभावन्तो हि दृश्यन्ते सूर्यरश्मिप्रदीपिताः ॥ ३ ॥
इत्थं स्वानुभवादार्यैस्तत्त्वार्थज्ञैः किलोदितम् ।
क्षितिजोर्ध्वगता दृश्यास्त्वदृश्यास्तदधःस्थिताः ॥ ४ ॥
गोलेऽस्मिं तारकनीरगोलाः सदोज्ज्वलाः सूर्यकरैर्विलग्नैः ।
दिने तु ते त्वर्ककरप्रदुष्टदृशा न दृश्याः क्षितिपृष्ठगानाम् ॥ ५ ॥
अथार्करश्म्युद्भवदौष्ण्यनाशात्सर्वग्रहे भानि सहस्ररश्मेः ।
सुदृष्टितः कानि चिदेवमत्र दृश्यानि भूसंस्थनृणां दिनेऽपि ॥ ६ ॥

दृश्यानि रात्रौ सुदृशात एव चैवं त्वपूर्णं हिमरश्मिबिम्बम् ।
बिना ग्रहाद्यं न कथंचिदत्र दृश्यं सुदृष्टेरभिघाततः स्यात् ॥ ७ ॥
एवं हि दूरान्तरितौ रवीन्दू कुजोर्ध्वसंस्थौ दिवसेऽपि तत्र ।
रवेः कुजासन्नतयेन्दुपूर्णबिम्बं नरः पश्यति तद्विवर्णम् ॥ ८ ॥
तद्रूपदृग्दोषवशात्तथैवं रवौ तु याम्योत्तरवृत्तसंस्थे ।
तादृग्विधं चापि न पश्यतीत्थं दृक्तारतम्याद्विबुधैर्विचिन्त्यम् ॥ ९ ॥
ऊर्ध्वाधरत्वं परिकल्प्य शङ्कोर्वशेन यो दृश्यविधुः सदोर्ध्वः ।
सर्वोर्ध्वगोऽर्कस्तदधोऽस्त्यवश्यं व्यासेरितं चेत्थमपि प्रमाणम् ॥१०॥
क्षितिप्रभावद्विधुबिम्बगोलच्छाया च या तद्गतदृष्टिचिक्रम् ।
प्रायस्तदर्कग्रहणेऽस्ति तेन तत्रार्करश्म्युद्भवदृष्टिदोषः ॥ ११ ॥
नैवेति शीतद्युतिनीरबिम्बं तद्दर्शनार्हं सुदृशेति चन्द्रः ।
रविं पिधत्ते न तथा ज्वपूर्णौ सदैव यस्मान्नरदृष्टिचिक्रम् ॥१२॥
कुपृष्ठगं तज्जलबिम्बगोलच्छायाग्रतो वाद्यगतं युतौ हि ।
प्रत्यक्षतस्तद्ग्रहणेन दृष्टं तयोरतस्तद्धि सुनीरबिम्बम् ॥ १३ ॥
द्रष्टा कथंचिद्रविरश्मिजातदृग्दोषतः पश्यति नैव तत्र ।
दर्शेन्दुवत्सग्रहणं विनाथ किं तर्हि सर्वं रविमण्डलं हि ॥ १४ ॥
स सर्वदा पश्यति सप्रभं तु सच्छिद्रता तेन न जायतेऽर्के ।
एवं कदाचिच्छशिबिम्बगोलभाग्राद्बहिःस्थं नरदृष्टिचिक्रम् ॥१५॥
संदर्शनं तत्र कथं नराणां भवेद्धि सूर्यग्रहणस्य चेत्थम् ।
नाशङ्कनीयं हि यतो ज्वपूर्णबिम्बान्महत्तद्धिमरश्मिबिम्बम् ॥१६॥
स्वल्पावशिष्टं रविबिम्बमिन्दु-
योगेऽवशिष्टं च महज्ज्वभूम्योः ।
स्वल्पावशेषान्नयनाभिघातो-
ऽल्पको महान्स्यान्महतोऽत्र नूनम् ॥ १७ ॥

तेनेन्दुयोगे तरणेः पिधानं संदृश्यते नैव तथा ज्ञभृग्वोः ।
सच्छिद्रता स्याद्रविमण्डले तत्तेजःप्रभावाल्पतया कदाचित् ॥१८॥
दृग्दैर्घ्यनाशाद्भृगुसौम्यजा सा
चोत्पातरूपा कथिता मुनीन्द्रैः ।
इत्थं किलोक्तं वलयग्रहेऽस्मिन्
शुक्रार्कदृक्सूत्रजकेन्द्रयोगे ॥ १९ ॥
तयोः परस्थूलसुसूक्ष्मतायां यथाभिघातो न भवेत्तथैव ।
जलाद्युपायं विरचय्य सूर्यमशक्यमप्यन्यदृशां सरन्ध्रम् ॥ २० ॥
दृष्ट्वाधुना सद्यवनाः सिताम्बुविम्बप्रतीतिं जनयन्ति लोके ।
दूरान्तरस्थाम्बुमयं निशायां तदुज्ज्वलं पश्यति यत्कुजोर्ध्वम्॥२१॥
एवं ग्रहा येऽर्कत ऊर्ध्वगोलस्थिताः सदैवार्ककरोज्ज्वलास्ते ।
तत्पूर्णविम्बत्वमतः सदैव त्वधःस्थयोस्त्वापि सितज्ञयोस्च ॥ २२ ॥
समीपगार्कस्य च कश्चिकातः कला तयोस्तत्र तथार्कतोऽल्पे ।
विम्बे च तेनोज्ज्वलपूर्णविम्बौ सदैवमाऊर्ध्वगोलविज्ञाः ॥२३॥
राश्यंशकैर्दूरगयोस्तयोश्च दृग्विम्बमानं सकलं निशायाम् ।
समुज्ज्वलं त्वर्ककरैर्विलग्नैर्द्रष्टा सदा पश्यति वात्र यस्मात् ॥२४॥
नैवं विधोस्तत्र भृगुज्ञविम्बान्महत्कलाविस्वमितिस्तथाकात् ।
कक्षावशाद्दूरगतस्य तस्य रविः समन्ताद्भ्रमणं करोति ॥ २५ ॥
विलग्नरव्यंशभिरत्रशौक्ल्य-
वृद्धिक्रमेणैव तु पूर्णशौक्ल्यम् ।
शुक्रज्ञतोऽस्यास्ति महान्विशेषो-
यतोनिशं शीतरुचेरिहैवम् ॥ २६ ॥
यन्नीरविम्बं रविविम्बतस्य
यथायथाल्पं च समीपगं च ।

तथातथा शीतकरामितिश्च तस्या-
धिकात्त लग्नार्ककरैरधस्तात् ॥ २७ ॥
भानोर्बिम्बे छिद्रभीत्या निरुक्तं विद्भिर्योर्यैस्तैजसत्वं सदैव ।
आर्षैः साकं संविरोधेन तन्त्रे तत्पक्षोयं मन्मते सुन्दरो न ॥२८॥
यस्मात्कान्तांशात्पकांशान्तरेर्का-
दुक्तौ शुक्रज्ञौ कथं दृष्ट्ययोग्यौ ।
एवं कान्तांशाधिकांशान्तरेपि
शुक्रः सूर्यान्नैव संदृश्यतेक्ष्णि ॥ २९ ॥
त्वत्पक्षे तत्तैजसत्वस्थिरत्वे युक्तं स्यात्तद्धेतुना केन तत्र ।
यद्युष्णांशोरंशुसंघप्रभावात्स्वल्पं तेजो दीपवन्नाशमेति ॥३०॥
यद्योगे यत्तैजसत्वं न भग्नं तद्भेदे वै स्यात्कथं तत्प्रभग्नम् ।
एवं भेदे यच्च भग्नं कथं तन्न स्याद्योगेर्कांशुजाक्षिप्रघातात्॥३१॥
अर्करश्मिप्रघातोस्ति नेत्रयोश्च महान् युतौ ।
अन्तरे त्वल्पकश्चैवं नृणामनुभवो यतः ॥ ३२ ॥
इत्थं त्वदुक्तिद्वयतर्कतोत्र दोषस्तवायं तदवस्थ एव ।
प्रत्यक्षसिद्धार्षविरोधतस्तु तत्तैजसत्वेस्ति नवीनवर्य ॥ ३३ ॥
अथार्कांशुनिमग्नं तत्तैजसं नैव दृश्यते ।
किं तु सर्वं रवेर्बिम्बं दृश्यतेत्रेति चेच्छृणु ॥ ३४ ॥
अर्करश्मिजदृग्दोषात्तैजसे यास्त्यदृश्यता ।
युतौ साम्बुमये चैव प्रमाणार्षादितेस्त्विह ॥ ३५ ॥
ये च नीरमया गोलास्तेजोगोलाद्विवस्वतः ।
स्वल्पाः स्युः सर्वतद्गोले शीतकरमर्द्धाधिकं भवेत् ॥ ३६ ॥
कुपृष्ठस्थैर्नरैर्गोलो नेत्राभ्यां दृश्यतेत्र यः ।
तद्दर्शने महानस्ति विशेषस्तं च संशृणु ॥ ३७ ॥

अथैकनेत्रदृष्ट्या तु गोलो यो दृश्यते बुधैः ।
तदर्धाल्पं सदा दृश्यं दृष्टिसूत्रान्तरस्थितम् ॥ ३८ ॥
नेत्रान्तरसमो व्यासो यस्य गोलस्य तस्य तु ।
अर्द्धं संदृश्यते केचिदित्यूचुर्नयनद्वयात् ॥ ३९ ॥
तत्राप्येकाक्षिजार्द्धाल्पवशेन नयनद्वयात् ।
नैव पश्यति गोलार्द्धं सम्यगित्थं तु मन्मतम् ॥ ४० ॥
यथायथा दूरगतो गोलस्तस्य तथातथा ।
दृश्यते त्वधिको भागः परं त्वर्द्धाल्पको हि सः ॥ ४१ ॥
एवं तन्निकटत्वे तु ज्ञेयस्तद्वैपरीत्यतः ।
स्थूलत्वं चाणुविम्बत्वं दृश्यते यच्च तच्छृणु ॥ ४२ ॥
नेत्रगोलककेन्द्रोत्थदृष्टिसूत्राणि देहिनाम् ।
वस्तुग्रहणशक्तानि तदन्तर्विम्बगोलकः ॥ ४३ ॥
दृश्यस्तद्व्याससमानं तु दृष्टिसूत्रान्तरं किल ।
यथायथा दूरगतो विम्बगोलस्तथातथा ॥ ४४ ॥
दृष्टिसूत्रान्तरं चाल्पं निकटे त्वधिकं सदा ।
स्वीयदृग्गोलवृत्ते स्यात्तेनाणुस्थूलविम्बता ॥ ४५ ॥
दृष्टिसूत्रान्तरे विम्बं दृश्यते नेत्रगोलके ।
सङ्कोचतस्तयोः स्वल्पमसङ्कोचेधिकं ह्यतः ॥ ४६ ॥
स्थूलत्वाणुत्वभेदो हि विम्बेस्ति त्रिविधः सदा ।
दृग्दूरासन्नभावेन चैकस्तद्वद्द्वितीयकः ॥ ४७ ॥
खमध्योदयभेदेन ज्योतिर्दृग्दोषतस्तथा ।
तृतीयस्त्वेति तज्ज्ञानं सवासनमथोच्यते ॥ ४८ ॥
विम्बीयगोलस्य च पृष्ठभागं स्पृष्ट्वा च ये दृक्किरणाः खगोले ।
लग्नास्तदन्तर्गतगोललिप्तास्ता एव तद्योजनविम्बजाताः ॥ ४९ ॥

योजनात्मकबिम्बस्य लिप्तिकाकरणाद्बुधैः ।
स्थूलत्वे निकटेऽणुत्वं दूरे सम्यक् कृतं किल ॥ ५० ॥
स्थूलत्वाणुत्वहेतोर्यत्पूर्वाचार्यैः स्वकल्पितम् ।
उक्तं तन्न मतं मेऽस्ति गोलयुक्तिविरोधतः ॥ ५१ ॥
अथागमोक्तसर्वोर्ध्वब्रह्माण्डान्तर्गतं तमः ।
नीलगोलोऽस्ति तन्मध्ये भूमिखेटर्क्षगोलकाः ॥ ५२ ॥
भगोलान्तस्तमो यत्तत्समर्थार्ककरैः सदा ।
नष्टं स्याच्च तदूर्ध्वं तु तदभावाद्यथास्थितम् ॥ ५३ ॥
नीलाम्बरं सर्वजनप्रसिद्धं यत्तस्य केन्द्रं क्षितिगर्भ एव ।
भगोलपृष्ठोर्ध्वगतं सदैव संदृश्यते भूमिगतैः सुवृत्तम् ॥ ५४ ॥
यत्रानिशं तारकखेचरेन्द्रा-
स्तैकत्र संस्था इव भान्ति यान्तः ।
स नीलगोलः किल दर्शनार्थं
भखेचराणां विहितोऽम्बरस्थः ॥ ५५ ॥
नीलं विना स्यान्नयनाभिघातो-
नीलं परं दर्शनयोग्यमस्मात् ।
नृदृष्टिसूत्रान्तरगं च बिम्ब-
गोलस्य खण्डं किल बिम्बसञ्ज्ञम् ॥ ५६ ॥
नृदृष्टिचिह्नात्खगबिम्बगोलकेन्द्रं तु तद्भर्भजदृष्टिसूत्रम् ।
तद्बिम्बगोलस्य च पृष्ठभागे स्पृष्टं समन्तान्नरदृष्टिसूत्रम् ॥ ५७ ॥
तन्मार्गवृत्तं परिधिस्तु बिम्बे तद्विस्तृतिं बिम्बमितिं वदन्ति ।
तत्पृष्ठजं दृष्टिजसूत्रमुक्तं यतस्च तत्पृष्ठविलग्नमस्ति ॥ ५८ ॥
तद्बिम्बगोलस्थसुपृष्ठयोगो-
यतोऽस्ति तद्बिम्बजगोलगर्भात् ।

यदन्तरे तत्खगविम्बगोल-
व्यासार्द्धतुल्यं भुजसंज्ञकं स्यात् ॥ ५९ ॥
तत्पृष्ठजं दृष्टिजसूत्रमत्र
कोटिः श्रुतिर्गर्भजदृष्टिसूत्रम् ।
दोःकोटियोगाच्छ्रवणः स्थितौ तु
यन्नम्बमानं द्विगुणं हि विम्बम् ॥ ६० ॥

तन्निवन्धनं च ।

आद्योक्तनद्योजनमण्डलार्द्धंतद्गर्भदृक्सूत्रवियोगयोगौ ।
कार्यौ तु तद्घातपदेन चात्र निघ्नं हि तद्योजनमण्डलार्द्धम् ॥ ६१ ॥
तद्गर्भदृक्सूत्रहृतं द्विनिघ्नं
खेगामिनां योजनविम्बमानम् ।
परं त्विदं विम्बजगोलखण्डं
संदृश्यतेऽन्यादृशमम्बरे तत् ॥ ६२ ॥
दृक्सूत्रयोरन्तरगं च तस्यान्तरस्थदृग्भेदवशाद्विभेदात् ।
भूगोलकेन्द्रं नरदृष्टिचिह्नं प्रकल्प्य कार्यं गणितं सुखार्थम् ॥ ६३ ॥

अथ कुगर्भदृक्सूत्रवशेन खकक्षागोले कलात्मकदृग्विम्बा-
नयनम् ।

त्रिज्यागुणं योजनमण्डलार्द्धं
खयोजनाख्यस्फुटकर्णभक्तम् ।
द्विनिघ्नतच्चापमितं ग्रहाणां
स्पष्टं कलाद्यं भवतीह विम्बम् ॥ ६४ ॥
अत्रोपपत्तिं शृणु भूमिगर्भात्खविम्बगोलस्थितपृष्ठलग्नम् ।
सूत्रं नयेत्खेचरगोलदेशे चैकं तथा विम्बजगोलकेन्द्रे ॥ ६५ ॥
अन्यच्च तद्विम्बजगोलपृष्ठ-

तत्सूत्रयोगावधि केन्द्रतः स्यात् ।
तद्व्यासखण्डं भुजरूपमस्ति
कोटिस्वरूपात्किल पृष्ठसूत्रात् ॥ ६६ ॥
तत्केन्द्रपृष्ठस्थितसूत्रयोर्यद्वृत्तस्य गोले विवरं कलाद्यम् ।
आद्योक्ततद्योजनमण्डलार्द्धचापोन्मितं युक्तियुतं सदैव ॥ ६७ ॥
सार्वभौमकृता कक्षागोलान्तः परिधौ स्थितम् ।
यत्खेटबिम्बगोलस्य खण्डं बिम्बं तदेव हि ॥ ६८ ॥
स्वोक्तं स्वधिया तत्र तत्कक्षपरिधेर्मितम् ।
कलाबिम्बं च पूर्वोक्तात्सूक्ष्मं तदसद्ध्रुवम् ॥ ६९ ॥
तद्बिम्बकक्षिकागोलयुतौ नेमिस्तु बिम्बजा ।
कर्णान्तरे कुगर्भात्स्यान्नहि तत्पृष्ठदृष्टिजम् ॥ ७० ॥
सूत्रं येनात्र तद्बिम्बं दृष्टियोग्यं यतोऽनिशम् ।
विना दृक्सूत्रसम्बन्धं दर्शनं न कथं चन ॥ ७१ ॥
कुगर्भदृष्टिचिह्नाद्यद्बिम्बगोलस्य मध्यगम् ।
गर्भदृक्सूत्रसंज्ञं तत्कर्णतुल्यं भवेदिह ॥ ७२ ॥
कर्णो भुजस्तु पूर्वोक्तबिम्बयोजनखण्डकम् ।
अत्र कोटिस्तु कर्णाल्पा पृष्ठदृक्सूत्रसंमिता ॥ ७३ ॥
तत्पक्षेऽथ कुगर्भीयदृष्टिचिह्नवशादपि ।
पृष्ठदृक्सूत्रसिद्धिर्न कथं दृग्योग्यता ततः ॥ ७४ ॥
बिम्बीयगोला रविणा मयोक्ताः स्वमार्गभेदेऽपि सदैकरूपाः ।
नीचोच्चयोरन्तरतश्च ते स्युस्तद्व्याससमानं तदपीह चैकम् ॥ ७५ ॥
दृग्रश्मिसम्बन्धवशात्तु दृष्टं
न्यूनाधिकत्वं गगनेऽस्ति तेषाम् ।
नीचोच्चमध्ये बहवः स्फुटाख्याः

कक्षास्थ तद्योजनविम्बमेकम् ॥ ७६ ॥
सर्वत्र संस्थं किल तद्वशेन
कलाश्च तद्भोत्थभवाः स्वविम्बम् ।
यस्मान्न कक्षा महती तु तस्य
स्वल्पाः कला योजनविम्बजाताः ॥ ७७ ॥
यस्याल्पिका तत्र कलास्तु बह्व्यः सदैकतद्योजनविम्बमानात् ।
स्युस्तद्वशादेव भवेदणुत्वं स्थूलत्वमूर्ध्वाधरसंस्थया तत् ॥ ७८ ॥
यद्भास्कराद्यैः सुगमं विहाय स्वार्षैर्विरोधाद्विहितं प्रयासात् ।
स्वल्पं प्रवृद्धिक्षयकल्पनाभ्यां कलादि भौमादिकविम्बमानम् ॥ ७९ ॥
तद्युक्तिशून्यं त्विह तन्मतेऽस्ति यतोऽत्र तद्योजनलिप्तिकातः ।
भिन्नं सदा तत्कलिकादिविम्बमेवं रवीन्द्वोश्च न सद्यतोऽत्र ॥ ८० ॥
यस्यार्द्धचापं द्विगुणं न तत्स्यात्तच्चापतुल्यं गणितात्कथं चित् ।
दृक्सूत्रयोरन्तरगेऽर्द्धचापे द्विघ्ने न तच्चापमिदं तदन्तः ॥ ८१ ॥
सूर्येन्दुभूभातनुयोजनानीत्यनेन ता मानकलास्त्वतश्च ।
दृक्सूत्रयोरन्तरगा नहि स्युस्तदन्यरीत्या त्वथ सार्वभौमे ॥ ८२ ॥
प्रोक्तं तदप्यत्र न सद्यतश्च
सूर्येन्दुमन्दश्रवणादिना याः ।
विम्बीयलिप्ताः किल विम्बसक्त-
कक्षास्थिता नैव कलाश्च ताः स्युः ॥ ८३ ॥
किं त्वन्यलिप्ताप्रमितेस्तु विम्बं कृत्वाऽथ तद्व्यात्ययतः स्वबुद्ध्या ।
विम्बस्य लिप्ता युगभागजीवेत्यनेन मानैक्यदलं कृतं तैः ॥ ८४ ॥
न तत्स्वकक्षाकलिकाप्रमाणात्स्वेषुः सदैवास्ति च तत्प्रमाणात् ।
ताभ्यां स्वकक्षाकलिकाप्रमाणात्कथं स्थितेरानयनं कृतं तैः ॥ ८५ ॥
सदैकरूपविम्बीयव्यासः कक्षाकलावशात् ।

अन्यथा कल्पयित्वा तं प्रतारितमिदं जगत् ॥ ८६ ॥

नीचोच्चबिम्बीयकला यथोक्ताः
कुभास्कराद्यैः क्षितिजादिकानाम् ।
तथा रवीन्द्वोर्न कथं कृताः किं
रवीन्दुवन्नैव कुजादिकानाम् ॥ ८७ ॥

स्फुटस्वकक्षाकलिकाप्रमाणाद्दृग्योग्यबिम्बीयकला यतः स्युः ।
यत्तद्विरुद्धानयनं विना सद्युक्तिं न सत्तत्सुदृशोच्चमार्यैः ॥ ८८ ॥

कुगर्भदृक्चिह्नवशात्तथा तत्स्थितोच्चकर्णः कुजबिम्बनिघ्नः ।
तच्छुक्रबिम्बेन हृतः फलं स्याद्यदारजो योजनजातकर्णः ॥८९॥

तदा खसंस्थोऽपि सितोत्थबिम्ब-
लिप्तासमा दृष्टिजसूत्रयुक्त्या ।
स्युस्तास्तदुक्ताद्गणितान्नहीत्थं
तद्दृग्विरोधो बहुधा विदोच्चः ॥ ९० ॥

कुगर्भदृक्सूत्रवशात्खगोले दृक्सूत्रयोरन्तरमेकमेव ।
मध्योदयान्तः क्षितिपृष्ठदृष्टिचिह्नाद्विभेदोऽस्ति तदन्तरस्य ॥९१॥

अतः कुपृष्ठस्थितदृग्वशेन दृश्यं हि बिम्बं महदल्पकं च ।
नैवं कुगर्भीयदृशा कथं चित्तद्दृष्टिदोषात्कथयन्ति चान्ये ॥ ९२॥

यत्प्रत्यहं स्वक्षितिजात्खमध्यं
यावद्विभिन्नं किल दृश्यबिम्बम् ।
वदामि तस्यानयनस्य युक्तिं
कुपृष्ठदृक्चिह्नवशात्सुसूक्ष्माम् ॥ ९३ ॥

स्पृष्ट्वा बिम्बीयपृष्ठं ये दृक्करास्त्वावरं गताः ।
तदन्तरे गोलविदा ज्ञेया दृग्बिम्बवासना ॥ ९४ ॥

दृक्करान्तः स्थितं बिम्बगोलखण्डं तदेव हि ।

दृश्यते तत्करान्तःस्थमहदाकाशसंस्थितम् ॥ ९५ ॥

खमध्यसंस्थे ग्रहविम्बगोलकेन्द्रेऽथ तद्गोलजपृष्ठभागे ।
स्पृष्ट्वोर्ध्वगा नायनरश्मयो ये नीलाम्बरे वृत्ततया समन्तात् ॥ ९६ ॥

लग्नाश्च तन्मण्डलसंमितं हि
नीलाम्बरस्थं खगदृग्जविम्बम् ।
दृग्रश्मिमध्यस्थितविम्बगोल-
स्वरूपमेव क्षितिगस्य दृश्यम् ॥ ९७ ॥

नृदृष्टिचिह्नात्खगविम्बगोलकेन्द्रान्तरे यत्किल दृष्टिसूत्रम् ।
तद्यत्र तद्गोलजपृष्ठलग्नं तत्रैव दृग्विम्बजकेन्द्रमूह्यम् ॥ ९८ ॥

तत्केन्द्रचिह्नाच्च समान्तरेण सर्वत्र तद्विम्बजनेमिरत्र ।
नैवं खमध्येऽन्तरसंस्थखेटे सम्यग्विशेषं शृणु तत्र चातः ॥ ९९ ॥

यदा नतं खेचरविम्बगोलकेन्द्रं हि दृङ्मण्डलगं तदा स्यात् ।
तद्गोलपृष्ठाधरसंस्थदेशं स्पृष्ट्वैव यच्चोर्ध्वगदृष्टिसूत्रम् ॥ १०० ॥

नीलाम्बरे संमिलितं हि तत्र त्वधःस्थितं विम्बजनेमिचिह्नम् ।
दृश्यं तथोर्ध्वस्थितपृष्ठभागं स्पृष्ट्वा च यल्लग्नमिहाम्बरेऽस्ति ॥ १०१ ॥

दृश्यं हि तच्चोर्ध्वगविम्बनेमि-
चिह्नं न ते द्वे निजपृष्ठकेन्द्रात् ।
तुल्येऽन्तरे स्तोऽथ तयोस्तु मध्ये
विम्बेऽन्यकेन्द्रं सुधिया प्रकल्प्यम् ॥ १०२ ॥

तत्केन्द्रतश्चिह्नयुगान्तरेण वृत्तं कृतं तत्परिधिक्रमेण ।
दृग्रश्मयोऽपीह युता भवन्ति तेनास्ति तद्वृत्तमितं हि विम्बम् ॥ १०३ ॥

रश्म्यन्तरे संस्थितदृश्यविम्बस्वरूपमेवास्ति महत्तथाऽल्पम् ।
दृग्योग्यनीलाम्बरगोलसंस्थं संदृश्यते भूमिगतैः सुवृत्तम् ॥ १०४ ॥

खमध्यसंस्थेऽल्पतरं सदैव महत्तथा स्वक्षितिजस्थिते स्यात् ।

तदन्तरे दृष्टिवशाद्विचित्रं तत्रैकरीत्या गणितं प्रवच्मि ॥ १०५ ॥
त्रिप्रश्नरीत्या खगबिम्बगोलगर्भोद्भवं पृष्ठभवं च तावत्।
कार्यं हि दृक्सूत्रमिह प्रयत्नैः सुसूक्ष्मबिम्बानयनप्रवीणैः ॥१०६॥
कुखण्डखेटश्रवणौ तु यस्य भुजौ च तस्याऽस्ति महीप्रमाणम्।
स्याद्गर्भदृक्सूत्रमिहाऽस्य लम्बो गर्भीयलम्बस्त्ववधे च तत्र ॥१०७॥
याऽल्पा तयोस्तद्गुणितं खगस्य प्रोक्तं च तद्योजनमण्डलार्द्धम्।
स्वपृष्ठदृक्सूत्रहृतं च लब्धं भुजो भवेत्संस्करणाय नूनम् ॥ १०८ ॥
ऋणात्मिका चेदवधाऽल्पिका स्या-
त्तद्गर्भलम्बो भुजयुक्तहीनः।
अधःस्थितोर्ध्वस्थितपृष्ठदृष्टि-
सूत्राच्च सूत्रं क्षितिगर्भगं स्यात् ॥ १०९ ॥
धनात्मिका चेद्विपरीतमुक्ता-
ज्ज्ञेयं हि तत्संगुणितं खगस्य।
दृक्पृष्ठसूत्रं विहृतं च गर्भ-
दृक्सूत्रकोणाऽत्र फलं द्विधा स्यात् ॥ ११० ॥
अधःस्थितोर्ध्वस्थितपृष्ठदृष्टिसूत्रे स्वलम्बः किल पृष्ठजः स्यात्।
स्वलम्बवर्गेण विहीनितस्य भकर्णवर्गस्य पदं हि यत्स्यात् ॥१११॥
तत्स्वस्वपृष्ठ्युत्थफलं प्रकल्प्यमथाऽत्र गर्भीयविलम्बवर्गम्।
भकर्णवर्गात्प्रविशोध्य शेषात्पदं युतोनं क्रमशश्च कार्यम् ॥११२॥
धनर्णगाऽल्पावधया च तद्गगर्भीयदृक्सूत्रमनेन निघ्नम्।
खेटस्य तद्योजनमण्डलार्द्धं तद्गर्भदृक्सूत्रहृतं च तत्स्यात् ॥ ११३ ॥
भगोलजं योजनमण्डलार्द्धमधःस्थपृष्ठीयविलम्बकेन।
तद्युक्तमूनं तु तदूर्ध्वजेन यत्स्याच्च तद्गश्रवणोत्थकृत्योः ॥ ११४ ॥
वियोगमूलं किल तत्स्वपृष्ठफलान्तरं दृष्टिजमन्तरं स्यात्।

भगोलतद्योजनमण्डलार्द्धंतद्वर्गयोर्योगपदं विनिघ्नम्॥ ११५॥

त्रिभज्यया भश्रवणोद्धृतं त-
द्वृत्तस्य चापं द्विगुणं द्विधैवम्।
खपृष्ठदृक्सूत्रवशात्कलाद्यं
तद्योगतुल्यं कलिकादिबिम्बम्॥ ११६॥

नक्षत्रकक्षाश्रितगोलके स्यात्सम्पूर्णचापप्रमितं तु वेद्यम्।
तत्पूर्णजीवादलसंमितेन व्यासार्द्धमानेन कृतं च वृत्तम्॥ ११७॥

तद्वृत्ततुल्यं किल दृश्यबिम्बमध्येऽस्य केन्द्रं सुधिया प्रकल्प्यम्।
तत्केन्द्रजं दृष्टिजसूत्रकं यत्तद्बिम्बगोलस्य च केन्द्रलग्नम्॥ ११८॥

तथैव तद्गर्भजदृष्टिसूत्र-
खगोक्तपृष्ठोद्भवकेन्द्रलग्नम्।
कथं चिदप्यत्र भवेत्खमध्या-
द्भिन्नस्थले नेति सुधीभिरूह्यम्॥ ११९॥

ग्रहस्य यद्योजनमण्डलार्द्धं
स्पष्टं च यद्योजनकर्णमानम्।
मत्वा तदेवात्र भजं यथोक्त्या
यत्स्याद्धि तद्वा कलिकादिबिम्बम्॥ १२०॥

इत्थं खमध्योदयभेदतस्तु सान्निध्यदूरस्थितिभेदतश्च।
दृग्बिम्बमाद्यानयनात्सुसूक्ष्ममतोऽत्र तद्गौरवमप्यदोषः॥ १२१॥

यथायथा कुपृष्ठाच्च नृणां दृक्चिह्नमूर्ध्वगम्।
तथातथाऽधिकं बिम्बमम्बरे दृश्यते नृभिः॥ १२२॥

पृष्ठोर्ध्वदृक्चिह्नमितासुकेन्द्रान्मत्वा कुखण्डं खगदृष्टिसूत्रे।
ज्ञात्वाऽधरोर्ध्वे निजदृष्टतुल्याद्धनर्णगालपावधयोक्तसिद्धिः॥ १२३॥

अत्रावधाया अल्पाया ऋणत्वं स्वीकृतं तु यत्।

आबाधायोगभूसिद्धौ त्वन्यतद्गणिते न तत् ॥ १२४ ॥

इत्थं च दृष्ट्वा गणितप्रयासं
खल्पान्तरात्तद्व्यवहारसिद्धौ ।
कुजादिनाद्यावधिकाल्पबिम्ब-
ह्रासक्रमात्तद्रविणान्यथोक्तम् ॥ १२५ ॥

सोन्नतं दिनमध्यद्युं दिनार्द्धाप्तं फलेन तु ।
छिन्द्यादिक्षेपमानानि तान्येषामङ्गुलानि तु ॥ १२६ ॥

सम्यक्चापानुपातोऽत्र पूर्वार्योक्तेन्दुशौक्ल्यवत् ।
ज्यानुपातान्नरैरत्र नाश्रितं स्वल्पबुद्धितः ॥ १२७ ॥

यथा नाश्रितं चोत्क्रमज्याविधाना-
द्विधोः शौक्ल्यमस्तीह लल्लप्रमुख्यैः ।
तथा भास्कराद्यैः क्रमज्याविधाना-
द्दलं चान्तरं बिम्बजं नाश्रितं हि ॥ १२८ ॥

अभावे त्वभावं तु भावेऽथ भावं
च दृष्ट्वैव मध्येऽपि ये चानयन्ति ।
विलोमानुलोमज्ययात्रानुपाता-
दयोग्येऽपि तेभ्यो महद्भ्यो नमोऽस्तु ॥ १२९ ॥

यदन्यरीत्या कविना स्वबुध्या ज्योतिर्विदा श्रीपतिनैवमुक्तम् ।
द्रष्टा महीव्यासदलेन यस्मात्समुच्छ्रितस्तिष्ठति भूमिपृष्ठे ॥ १३० ॥

नभःस्थभानोर्निकटस्ततस्तं सुभास्करं सूक्ष्ममवेक्ष्यतेऽसौ ।
पिधीयते भानुवपुर्मयूखैः समन्ततः पङ्कजकर्णिकेव ॥ १३१ ॥

तत्केसरैरम्बरमध्यवर्त्ती निरीक्ष्यते तेन च सूक्ष्ममूर्त्तिः ।
वसुन्धरागोलनिरुद्धधामा दूरस्थितोऽयं सुखदृश्यबिम्बः ॥ १३२ ॥

महीजवृत्तोपगतो विवस्वा-

ततो मह्यान् भात्यरुणो विरश्मिः ।
चेदित्थमाद्यानयने सुयुक्ति-
र्ज्योतिर्भवाद्दृष्ट्यभिघाततोऽस्ति ॥ १३३ ॥
तर्हीन्दुभान्वोर्ग्रसनेऽल्पके तत्पदे त्वलक्ष्यं कथमस्ति बिम्बम् ।
नृणां पुनर्दृश्यविधिस्फुटत्वे कृतेऽप्यतस्तन्न मतं हि रम्यम् ॥१३४॥
मानैक्यखण्डं विहितं पुराणैः स्थित्यर्थमर्कग्रहणे रवीन्द्वोः ।
केन्द्रान्तरं तन्नहि नेमियोगेऽतः सूक्ष्मरीत्या तदहं प्रवच्मि॥१३५॥
अथोर्ध्वस्वकक्षाख्यगोले सदैव
रवेर्बिम्बगोलोऽस्ति चैवं विधोश्च ।
अधःस्वीयकक्षाख्यगोलेऽस्ति गोलः
सदा बिम्बजस्तद्युतिः स्यात्कथं हि ॥ १३६ ॥
अतो दृष्टिसूत्रे बुधैः कल्पिता सा
तयोः सूत्रयोरन्तरे चार्कगोले ।
भवेद्बिम्बगोलस्य विस्तारतुल्यं
रवेर्मण्डलं चन्द्रगोलेऽपि तद्वत् ॥१३७॥
तयोः सूत्रयोरेव यच्चान्तरं त-
द्रवेर्मण्डलं योगसिद्धौ प्रकल्प्यम् ।
तयोः सूत्रयोरन्तरं योजनाद्यं
रवेः कक्षिकायां न तच्छीतरश्मेः ॥ १३८ ॥
तयोर्मण्डले पृष्ठदृक्सूत्रके ते
ज्यकाख्ये प्रसाध्ये विधोः कक्षिकायाम् ।
अथ स्पर्शकाले विमुक्तौ कुगर्भात्
कुपृष्ठाच्च यत् पृष्ठदृक्सूत्रमस्मात् ॥ १३९ ॥
रवेर्बिम्बगोलस्य केन्द्रं तु वेद्यं

रवेर्मण्डलार्द्धेन सूत्रेण तिर्यक् ।
विधोर्बिम्बगोलस्य केन्द्रं तु तद्व-
द्रवेर्भिन्नदिक्स्थार्द्धतन्मण्डलेन ॥ १४० ॥
तदैक्यं तु केन्द्रान्तरं चन्द्रभान्वो-
र्भवेत्पूर्णजीवात्मकं सूत्रमत्र ।
परं पृष्ठसूत्रं द्वयोरेकमेव
यदा नेमियोगस्थितं स्यात्तदेत्थम् ॥ १४१ ॥
यदा बिम्बगोलीयपृष्ठाख्यदृष्ट्यु-
द्भवे भिन्नसूत्रे तदा त्वन्यथैवम् ।
विधोः कक्षिकागोलसंस्थेन्दुभान्वो-
र्भवेतां च ये मण्डले तद्युतिर्हि ॥ १४२ ॥
स्फुटो नैव किं तर्हि दृक्सूत्रयोगा-
द्भवेदेकगोलेऽपि चोक्तप्रकारात् ।
स्वपृष्ठाख्यबिम्बैक्यचिह्नाच्च तिर्यक्
स्वबिम्बार्द्धतुल्यान्तरेण स्वकेन्द्रे ॥ १४३ ॥
भुजोऽत्रास्ति मानैक्यखण्डं च कोटि-
स्तयोः पृष्ठदृक्सूत्रयोरन्तरं हि ।
तदुत्थश्रुतेरर्द्धचापं द्विनिघ्नं
रवीन्द्वोर्भवेदन्तरं नेमियोगे ॥ १४४ ॥
कुगर्भैकदृक्सूत्रतः सार्वभौमे
यदा मण्डलार्द्धे समे स्तस्तदानीम् ।
तयोः पृष्ठसूत्रैक्यतो मानयोगा-
दलं बिम्बकेन्द्रान्तरं प्रोक्तरीत्या ॥ १४५ ॥
यदा नैव तुल्ये रवीन्द्वोस्तु बिम्बे

तदा बिम्बकेन्द्रान्तरोत्थं च सूत्रम् ।
तयोर्मानयोगार्द्धतुल्यं न तत्र
न सङ्गच्छते सार्वभौमोक्तमस्मात् ॥ १४६ ॥
मानैक्यखण्डेन समेऽपि केन्द्रान्तरे तु तत्सूत्रगनेमिजैक्यम् ।
तदुक्तकक्षागतनेमिजैक्यं न जायते तद्युतितोऽपि तत्र ॥ १४७
यतो हि कक्षागतनेमिजैक्ये
ग्रस्तं च तद्बिम्बकमुक्तयोगः ।

कुगर्भदृक्सूत्रवशेन मानैक्यखण्डदर्शनम् ॥




नो केन्द्रसूत्रस्थितनेमिजात-
इत्थं च ते द्वे अपि दृष्ट्ययोग्ये ॥ १४८ ॥

खदृग्युतौ दृक्तनुनेमिजैक्यं छित्त्वैव तद्गोलसुपृष्ठयोगात्।
यैः स्वीकृतं बिम्बदलैक्यरूपं केन्द्रान्तरं तन्नहि दर्शनार्हम्॥ १४९॥
चन्द्रकर्णं भकर्णाख्यं रविकर्णं खगस्य च।
कर्णं च कल्पयित्वार्कखगदृक्सूत्रकादिभिः॥ १५०॥
चन्द्रगोलेऽपि पूर्वोक्त्या रवेर्योजनमण्डलम्।
पृष्ठदृक्सूत्रकं कृत्वा तयोस्ते त्रिज्यकाहते॥ १५१॥
चन्द्रकर्णोद्धृते कृत्वा बिम्बकेन्द्रजसूत्रकम्।
साध्यं मानैक्यखण्डं च तदेव परिकल्पयेत्॥ १५२॥
दुःसाध्यदृक्सूत्रजकल्पनां तां त्यक्त्वोदितं श्रीरविणा सुखार्थम्।
ग्रीतांशुदृक्स्थागतयोरिनेन्द्वोः केन्द्रान्तरं मानदलैक्यमेव॥ १५३॥
अत्रोपपत्तिबोधार्थमित्थं सर्वं विजानता।
गोलं ज्ञात्वा तु बिम्बीयां दर्शयेत् चेत्रसंस्थितिम्॥ १५४॥
दृक्सूत्रयोगे शशितिग्मरश्म्योर्बिम्बीयगोलस्थितकेन्द्रयोर्हि।
तयोश्च दृक्सूत्रवियोगरूपाद्बिम्बान्तरादेव यदिन्दुभाग्रम्॥१५५॥
प्रभाधिकाराद्विहितं तदेव
यद्दृष्टिचिह्नं किल तद्दशेन।
चन्द्रस्य बिम्बं रविबिम्बतुल्यं
भवेच्च दृग्योग्यमिहान्यथा न॥ १५६॥
पूर्णग्रहोऽर्कस्य भवेद्विमांशोः
प्रभाग्रदृक्सूत्रकयोः समत्वात्।
दृक्सूत्रमल्पं यदि भाग्रमाना-
द्भान्तः स्थितं तन्नरदृष्टिचिह्नम्॥ १५७॥
बिम्बाधिकत्वाद्रवितो विधोश्च खस्थ ग्रहस्तन्न बुधैर्विचिन्त्यः।
भाग्राधिकं दृष्टिजसूत्रकं चेद्भाग्रादहिस्तन्नरदृष्टिचिह्नम्॥ १५८॥

तत्रोच्चनीचाख्यनिकेतनस्थ-

दृक्कर्णतुल्यत्वत्यजनेन ज्ञेयम्
 
तत्रोष्णरश्मेर्वलयग्रहः स्या-

दल्पत्वतोऽर्काच्छशिबिम्बकस्य ।

नैवान्यथेत्थं किल बिम्बसूक्ष्म-

दृक्चेत्ररीत्या सुधिया विचार्यम् ॥ १५९ ॥

एवं यदा नीचभसंस्थितोऽर्कः स्वोच्चेऽथ तद्राशिग एव चन्द्रः ।

तदा सदा तद्वलयाकृतेश्च नूनं बुधेन्द्रैः परमत्वमूह्यम् ॥ १६० ॥

तद्गर्भदृक्चिह्नवशाच्च पृष्ठ-

दृक्चिह्नरीत्यापि परत्वमेवम् ।

विचित्रदृक्चिह्नवशात् कथं चि-

न्न ज्ञायते बिम्बभवं पुरोक्तम् ॥ १६१ ॥

आसन्नत्वात् कुपृष्ठाच्च मध्ये तीव्राः करा रवेः ।

दूरस्थत्वात्तदन्यस्मिन् प्रभावोऽल्प इति स्फुटम् ॥ १६२ ॥

अथ ज्योतिर्मयं खेटबिम्बं यद्दृश्यतेऽल्पकम् ।

तद्दृग्दोषात्तदा तस्य न्यूनत्वे त्वधिकं च तत् ॥ १६३ ॥

इत्थं तृतीयभेदोत्थसूक्ष्मतत्त्वं विजानता ।

रविणा नियमो बद्धस्ततस्तदनुगैश्च सः ॥ १६४ ॥

अथ ग्रहबिम्बवशेन नक्षत्रबिम्बज्ञानम् ।

यद्भं च यत्खेटसमं भगोले संदृश्यते योजनखेटबिम्बम् ।

भकर्णनिघ्नं निजकर्णभक्तं तत्स्याद्भबिम्बं किल योजनाद्यम् ॥१६५॥

परं तु यद्यत्र विहाय कर्णं ज्ञातं च दृक्सूत्रवशादिदं चेत् ।

ततोऽपि तत्सूक्ष्मतरं च बोध्यमेवं भबिम्बे सति खेटबिम्बात् ॥१६६॥

अर्द्धत्रिभागादिमिते तथा द्व्या-

दि२।३।४ग्नप्रमे तद्विहृतं गुणं च ।

भजं च तद्योजनबिम्बकं स्या-

ह्स्वेष्टं खगोलेऽन्यकृतं न सत्तत् ॥ १६७ ॥

खेटेष्वपीत्थं तु मिथः प्रकल्प्यं
साम्यादिदृष्टौ दिवि योजनाद्यम्।
स्वोच्चेऽपि नीचेऽपि तदेव विम्बं
चेद्विम्बकर्णौ खगजौ यथार्थौ ॥ १६८ ॥

खमध्यस्थयोर्वा तदन्यैकदेश-
स्थयोः सूक्ष्ममूह्यं त्विदं तत्त्वविद्भिः।
तयोर्मध्यभूजान्तरे विम्बसूक्ष्म-
प्रभेदादसूक्ष्मं यतस्त्वामनन्ति ॥ १६९ ॥

द्रष्टा दृग्द्वयसंस्थैर्यात्पश्यन्नीलाम्बरे ग्रहम्।
खचरद्वितयं तत्रावश्यं पश्यति मानवः ॥ १७० ॥

खगद्वयं चैकखगे नरो यत्प्रपश्यति स्वीयविलोचनाभ्याम्।
सन्दर्शनात्तद्धि न चैकदृष्ट्या तद्वासनां युक्तियुतां प्रवच्मि ॥ १७१ ॥

सत्यन्तरेऽपीह खगो विलोक्यो यस्याश्रयेणैव तदम्बरे च।
परस्परं ये ग्रहसक्तदृष्टिद्वयोत्थसूत्रे च विभिन्नदिक्स्थे ॥ १७२ ॥

लग्ने च यत्राथ तयोर्विभेदाद्ग्रहद्वयं पश्यति तत्र नूनम्।
ग्रहोत्थदृक्सूत्रखयोगचिह्ने यतोऽस्त्यवश्यं खचरो नृदृश्यः ॥ १७३ ॥

यद्दृष्टिसूत्रे खचरोऽस्ति दृश्यो यः खेऽथ तं पश्यति नान्यदृष्ट्या।
एवं नरा दृग्द्वयसूत्रभेदाद्विम्बैपरीत्यादवलोकयन्ति ॥ १७४ ॥

इति श्रीकमलाकरविरचिते सिद्धान्ततत्त्वविवेके विम्बाधिकारः।

## अथ छायाधिकारः।

यैर्यैर्भवेद्दृक्किरणावरोधस्तैस्तैस्तु सूर्यस्य करावरोधः।
भवेदवश्यं यदि चान्तरस्थं दृगर्कयोस्तत्किल तर्ह्यदृश्यम् ॥ १ ॥

विम्बं रवेस्तत्र नृणां तदर्ककरास्च तद्वत्र लगन्ति यस्मात्।

अतः स्वतःसिद्ध इहान्धकारो दृग्गोचरोऽर्कस्य करावरोधात् ॥ २ ॥
यावान् करावरोधेन व्यक्तो यः करमध्यगः ।
विस्तारायामतस्तावान् ज्ञेयो भासंज्ञकोऽत्र सः ॥ ३ ॥
अर्कतो योऽल्पको गोलस्तच्छायाविस्तृतिर्भृशम् ।
उत्तरोत्तरमल्पा स्यादधिकस्याधिका स्मृता ॥ ४ ॥
यथार्काल्पकुगोलस्य छायादैर्घ्यं प्रसाधितम् ।
तथैव ग्रहविम्बीयगोलभादैर्घ्यमानयेत् ॥ ५ ॥
ग्रहस्य यद्योजनमण्डलार्द्धं ग्रहार्कविम्बान्तरसूत्रनिघ्नम् ।
भक्तं तयोर्योजनमण्डलार्द्धान्तरेण तत्स्यात् खगभाग्रदैर्घ्यम् ॥ ६ ॥
यत्तत्खगोलस्थितखेटभान्वोर्विम्बीयगोलोद्भवकेन्द्रसूत्रम् ।
प्रसिद्धतद्योजनसंख्यया स्याद्भासिद्धये तत्कथयामि सूक्ष्मम् ॥ ७ ॥
ग्रहार्कयोरन्तरकोटिजीवा ग्रहेषुकोटिज्यकया विनिघ्नी ।
त्रिज्योद्धृता स्यात्फलशिञ्जिनी तच्चापं फलं तन्नवहीनखाङ्काः ॥ ८ ॥
स्फुटग्रहार्कान्तरमाद्यपादे भार्द्धांशशुद्धाश्च पदे द्वितीये ।
तृतीयके भार्द्धलवैः १८० युतास्ते चक्रांश ३६० शुद्धाश्च पदे चतुर्थे ॥ ९ ॥
ग्रहाऽर्कयोस्तद्विवरेऽथ भागाः खाग्न्युद्धृताः स्याद्ग्रहपूर्वकं तत् ।
ग्रहार्कयोस्तद्विवरं स्फुटाख्यं ग्रहार्कविम्बोर्ध्वगमण्डले हि ॥ १० ॥
फलस्वकोट्योर्विवरेण वाल ग्रहार्कयोरन्तरकं युतोनम् ।
पदे विधेयं विषमे समे च क्रमाद्ग्रहार्कान्तरकं स्फुटं स्यात् ॥ ११ ॥
ग्रहार्कयोः स्पष्टवियोगजीवा ग्रहस्य कर्णेन गुणा विभक्ता ।
त्रिभज्यया लब्धमितो भुजः स्यादेवं फलज्या ग्रहकर्णनिघ्नी ॥ १२ ॥
त्रिज्योद्धृता तत्सहितो विहीन-
स्तीक्ष्णांशुकर्णः कथितात्र कोटिः ।
स्पष्टाभिधे कर्किमृगादिपदके

ग्रहाऽर्कयोस्तद्विवरेऽथ कर्णः ॥ १३ ॥

तद्वर्गयोगस्य पदं स्वकक्षागोलस्थयोः खेचरतीक्ष्णभान्वोः ।
स्याद्यत्र कुत्र स्थितयोश्च बिम्बकेन्द्रान्तरे योजनसूत्ररूपः ॥ १४ ॥

भाग्रौच्च्रयोरानयनाय पूर्वैर्नोदाहृतो यः खचरस्य चैवम् ।
विवृत्तगात्खेचरतः सुसूक्ष्मः प्रोक्तो मया बुद्धिमतां सुखार्थम् ॥ १५ ॥

इत्थं यदुक्तं रविकक्षिकातस्त्वधःस्थितानां च तथोर्ध्वगानाम् ।
खेटार्कयोर्व्यत्ययतश्च बोध्यं यथोक्ततद्बिम्बवियोगसूत्रम् ॥ १६ ॥

अथान्यथा वा कथयामि सम्यक् चन्द्रार्कबिम्बान्तरसूत्रयुक्तिम् ।
याम्योत्तरावत्र भुजौ च कोटी पूर्वापरे मण्डलतो रवीन्द्वोः ॥ १७ ॥

स्वकर्णनिघ्न्यौ त्रिगुणोद्धृते ते
स्ववाङ्ककोटी किल योजनाद्ये ।
कार्ये च तुल्यान्यदिशोः क्रमेण
वाह्वोश्च कोट्योश्च वियोगयोगात् ॥ १८ ॥

स्फुटे च ते स्तः खलु वाङ्ककोटी चन्द्रार्कयोर्मध्यगतेऽत्र नूनम् ।
कार्यं तयोर्वर्गयुतेश्च मूलमाद्याभिधं चैवमिनेन्दुशङ्कू ॥ १९ ॥

स्वकर्णनिघ्नौ त्रिगुणोद्धृतौ च
तौ यौजनाद्यौ भवतस्तयोश्च ।
ऊर्ध्वाधरैकान्यदिशोः क्रमेण
वियोगयोगाद्भवतीह चान्यः ॥ २० ॥

तयोश्च वर्गैक्यपदं स कर्ण इन्द्वर्कबिम्बान्तरसूत्ररूपः ।
यदर्थमज्ञानवशाद्भ्रमन्ति स्वस्वाभिमानाद्ध्रुवगोलविज्ञाः ॥ २१ ॥

यद्बिम्बगोलकेन्द्रोत्थं सूत्रं खेटार्कयोरिह ।
अनल्पं सर्वदैव स्यात्तत्कर्णान्तरतो हि तत् ॥ २२ ॥

ग्रहार्कबिम्बान्तरसूत्रमुक्तं भासिद्धिदं तच्च यथायथाल्पम् ।

तथातथाल्पा ग्रहबिम्बगोलच्छायाधिकत्वे त्वधिका सदेयम् ॥ २३ ॥

अथार्कमध्यकर्णप्रमाणेन भूच्छायादैर्घ्यं २२३६२१ एवमुच्चकर्णप्रमाणेन । २३२१२५ एवं नीचकर्णप्रमाणेन । २१५१३६ एवं चन्द्रज्ञभृगुच्छायाः मध्यकक्षाप्रमाणेनार्कवशेन कर्णान्तरसमे केन्द्रान्तरसूत्रे क्रमेण छायादैर्घ्याणि लिख्यन्ते । चन्द्र ५०५२२ । बु. ११८५४ । भृ. २१८६२ । एवं नीचस्थिते रवौ तद्राशिग एव विधुरुच्चगतस्तदेन्दुच्छायादैर्घ्यं च ४८०७४ ॥

खमध्यगौ बिम्बजगोलकेन्द्रयोगाद्यदा स्तः शशितिग्मरश्मी ।
तदेन्दुभाग्रं क्षितिखण्डहीननिजश्रुतेरल्पतरं च तत्र ॥ २४ ॥
भवेत्कुपृष्ठोर्ध्वगमिन्दुभाग्रं भामण्डलं चेदधिकं पृथिव्याम् ।
एवं खमध्यादितरत्र भाग्रदृक्सूत्रकाभ्यां सुधिया विचार्यम् ॥ २५ ॥
आर्याविरोधतो गर्भात्त्रिप्रश्ने या प्रभोदिता ।
तदसूक्ष्मत्वतः पूर्वैः कथिता सा तदन्यथा ॥ २६ ॥
स्वभुक्तितिथ्यंशविवर्जितो ना महान् लघुः खाग्निकृतांशहीनः ।
स्पष्टो भवेदस्फुटजातदृग्ज्या संताडितार्कैः स्फुटशङ्कुभक्ता ॥ २७ ॥
प्रभा भवेन्ना तिथिभागतोऽल्पो यावद्विधुस्तावदसावदृश्यः ।
दृश्यप्रभासाधनमुक्तमेवं शिरोमणौ स्वक्षितिपृष्ठशङ्कोः ॥ २८ ॥
कुगर्भशङ्कुदृग्ज्ययोर्द्विनुर्लवैः क्रमेण यौ ।
स्वबिम्बखण्डलिप्तिकायुतोनितौ ज्यके तयोः ॥ २९ ॥
नृदृग्ज्ये ततो दृग्ज्यका सूर्यनिघ्नी
धराच्छन्नसूत्रोनशङ्क्वाख्यभक्ता ।
प्रभा दर्शनीया ततो भाश्रुतिः स्यात्
कुपृष्ठे स्वबिम्बोर्ध्वनेमिप्रजाता ॥ ३० ॥
कुच्छन्नसूत्रार्कलवेन निघ्नी दृष्टप्रभा दृष्टभया युताप्ताः ।

कुच्छन्नसूत्रार्कयुतेश्च वर्गयोगात्पदं तद्विहृता त्रिभज्या ॥ ३१ ॥
कुच्छन्नसूत्रार्कयुतिप्रगुण्यास्तास्तापभागा रहिता निजेन ।
विम्बस्य खण्डेन ततो ज्यकासौ भूगर्भतोऽभीष्टनरोऽतिसूक्ष्मः ॥३२॥
इत्थमुक्तं हि सिद्धान्तसार्वभौमे स्वयुक्तितः ।
रङ्गनाथात्मजेनाद्याङ्क्तिन्नखच्चेवरीतितः ॥ ३३ ॥
रविरश्म्यवरोधतोऽत्र लम्बाकृतिसिद्धक्षितिपृष्ठगार्कशङ्कोः ।
स्फुटभा भवति प्रमाणमस्याः कथयामि प्रथमानुसारमत्र ॥ ३४ ॥
त्रिप्रश्नरीत्या प्रथमं प्रसाध्ये दृङ्मण्डलस्थार्कजशङ्कुदृग्ज्ये ।
कुच्छन्नसूत्रेण निजेन हीनः स गर्भशङ्कुर्निजपृष्ठभूजात् ॥ ३५ ॥
रवेस्तु पृष्ठाख्यनरोऽथ शङ्कुदृग्ज्ये तु ते भानयनाय योग्ये ।
रविघ्नदृग्ज्यार्कविहीनपृष्ठनरेण भक्तार्क १२ नरप्रभा स्यात् ॥ ३६ ॥
दृग्ज्या कुपृष्ठीयनृणां तदर्कवर्गैक्यमूलं किल भाश्रुतिः स्यात् ।
इत्थं कृतं विम्बजकेन्द्रजातशङ्क्वग्रसक्तार्ककरान्तरेण ॥ ३७ ॥
अत्रोपपत्तिबोधार्थं पृथिवीमपवर्तिताम् ।
कुर्यादर्कस्य कक्षां च तथा तद्वृत्तमध्यगम् ॥ ३८ ॥
तिर्यक्सूत्रं च गर्भीयं कुजसूत्रं तथोर्ध्वगम् ।
कुर्यान्मध्याभिधं तच्च यत्र लग्नं कुमण्डले ॥ ३९ ॥
कुपृष्ठं तत्र विज्ञेयं तत्र रव्यङ्गुलो नरः ।
तथा कुपृष्ठतस्तिर्यग्गर्भक्षितिजसूत्रतः ॥ ४० ॥
समान्तरेण यत्सूत्रं पृष्ठक्षितिजसंज्ञकम् ।
स्वीयकक्षागतार्कस्य विम्बकेन्द्रान्नरागतः ॥ ४१ ॥
सूत्रं कर्णाभिधं कुर्यात्स्वीयपृष्ठकुजावधि ।
तत्र यच्छङ्कुमूलस्य कर्णसूत्रस्य चान्तरम् ॥ ४२ ॥
दृष्टच्छाया तथा कर्णः छायाशङ्क्वग्रगस्त्विह ।

इत्थमत्र प्रतीत्यर्थं छायाक्षेत्रस्य दर्शनम् ॥ ४३ ॥




सार्वभौमशिरोमण्योः कुपृष्ठादर्कसङ्गतम् ।
सूत्रं कर्णो भुजो दृग्ज्या कोटिः पृष्ठस्फुटो नरः ॥ ४४ ॥
दृष्टच्छायान्यजातीयं जात्यमुक्तमिदं तथा ।
पूर्वोक्तादतिसूक्ष्मार्थं दृष्टच्छायानुपाततः ॥ ४५ ॥
कुच्छन्नसूत्रजं जात्यं तद्योगाच्च तृतीयकम् ।
जात्यं तदनुपाताच्च गर्भशङ्कुप्रसाधनम् ॥ ४६ ॥
कृतं तदप्यसद्बिम्बोर्ध्वाद्यद्गर्भकुजावधि ।
यतस्त्रिज्यां गृहीत्वैव नाश्रितं गौरवाच्च तत् ॥ ४७ ॥
विजातीयानुपातोत्थं यद्यभीष्टं च तन्मते ।
दृष्टभाक्षेत्रतस्तेन न कथं लाघवात्कृतम् ॥ ४८ ॥

कर्णस्य वर्गो द्विगुणः कुखण्डवर्गोनितस्तस्य पदं विहीनम् ।
कुखण्डकेन त्रिगुणार्द्धनिघ्नं कर्णोद्धृतं तस्य धनुर्नतांशाः ॥ ४९ ॥
यदा रवेः स्युर्नरभा नरेण समा तदा भास्करपूर्वकोक्त्या ।
कुपृष्ठजस्पष्टनरोऽस्फुटोऽस्य दृग्ज्यासमस्तत्र यतोऽस्ति नूनम् ॥ ५० ॥
कुपृष्ठगाल्पस्य नरस्य चाग्रं स्पृष्ट्वा यदर्कात्किल कर्णसूत्रम् ।
समस्थितौ यत्र विलग्नमस्मात्तच्छङ्कुमूलावधि तत्र भा स्यात् ॥ ५१ ॥
दृश्याथ सा नैव नरेण तुल्या कथं ह्यतस्तद्गणितं सुसूक्ष्मम् ।
छायोद्भवज्ञोऽत्र सुसूक्ष्मतत्त्वविचारणज्ञस्य मतेऽस्ति नूनम् ॥ ५२ ॥
वस्तुतस्तु धरणीसमपृष्ठे भिन्नभिन्ननरभा नरभेदात् ।
अस्ति निश्चितमिहोदितदृश्यतत्प्रभाजनितजात्यविभेदैः ॥ ५३ ॥
लक्ष्यतेऽल्पनरजाल्पनरेण नैव सात्र खलु किं तु समैव ।
ह्रस्वदीर्घनरमानविभेदेऽप्यत्र ते च रविसंख्यविभागैः ॥ ५४ ॥
तुल्यतामुपगताः सततं तैर्यच्च भानयनमुक्तवदत्र ।
तुल्यभेऽप्यथ सुसूक्ष्मजतत्तज्जात्यभेदत इहास्ति विभिन्नम् ॥ ५५ ॥
दृक्शङ्कुदृग्ज्ययोः संख्या प्रसिद्धा येन मानतः ।
नैव तेनाल्पशङ्कोस्स्व संख्या तत्र कथं तयोः ॥ ५६ ॥
वियोगयोगौ युक्तौ स्तस्तज्ज्ं यत्तच्च सत्कथम् ।
सिद्धान्ततत्त्वं वदतां नराणां सूक्ष्मपक्षतः ॥ ५७ ॥
अतस्तृतीयपक्षोक्तं सार्वभौमोदितं च यत् ।
कुच्छन्नार्कयुतेरत्र सूक्ष्मं सत्स्वेनरीनितः ॥ ५८ ॥
अत्यल्पनरभेदोऽपि छायाभेदो न लक्ष्यते ।
पृष्ठभोत्थमतः सूक्ष्मं स्याद्यतो भास्करोदितम् ॥ ५९ ॥
अनन्यगत्या स्फुटभार्थमित्थं युक्तः सतां सद्गणितप्रपञ्चः ।
कुपृष्ठतो भानयनं सुखात्मन्नत्रस्थदृक्खेचरदर्शनार्थम् ॥ ६० ॥

आर्षैः साकं विरोधेन विम्बपृष्ठोर्ध्वदेशतः ।
आनीता सार्वभौमे तद्विचारं शृणु चादरात् ॥ ६१ ॥
वस्तुतः स्वेष्टशङ्कोस्तु मूलं स्वक्षितिपृष्ठगम् ।
तन्मते तन्न तत्रास्ति यत्र चास्ति हि तन्नरः ॥ ६२ ॥
तत्पृष्ठात्स नरो नैव कुकेन्द्राभिमुखो भवेत् ।
कुपृष्ठमेव तत्पक्षे छायाग्रं च तदग्रतः ॥ ६३ ॥
विम्बपृष्ठोर्ध्वदेशं तु स्पृष्ट्वा सूत्रं च यद्गतम् ।
तत्स्पृष्टतत्प्रदेशाच्च यः करोऽर्कस्य विद्यते ॥ ६४ ॥
छायास्वरूपसिद्ध्यर्थं स एवात्रोपयुज्यते ।
नान्यः स चोर्ध्वदेशस्तु वास्तवस्ताय तन्मते ॥ ६५ ॥
नायं किं तु स्वकक्षास्थप्रदेशो विम्बनेमिजः ।
पृष्ठदृक्सूत्रतस्तायं नहि सिध्यति सूक्ष्मतः ॥ ६६ ॥
यतः कुपृष्ठभागाद्यद्विम्बगोलस्य मध्यगम् ।
गर्भदृक्सूत्रकं तत्स्यादत्रैवं तस्य साधनम् ॥ ६७ ॥
दृक्शङ्कुदृग्ज्ययोर्वर्गयुतिमूलं भवेदिह ।
गर्भदृक्सूत्रकं तत्स्यात्तद्वर्गाच्च विशोधयेत् ॥ ६८ ॥
अर्कविम्बीयगोलस्य व्यासार्द्धकलिकाकृतिम् ।
तन्मूलं पृष्ठदृक्सूत्रं कुपृष्ठाद्विम्बपृष्ठगम् ॥ ६९ ॥
तन्मितं तन्मते नैव यच्च तत्पक्षतोऽस्ति तत् ।
कक्षास्थानात्कथं चिन्न स्वीयभूपृष्ठगं भवेत् ॥ ७० ॥
सुसूक्ष्मार्थं प्रवृत्तानामुचितं तत् कथं भवेत् ।
अतस्तस्योर्ध्वदेशस्थकिरणायोगतस्त्विह ॥ ७१ ॥
तच्छायानयनं दुष्टं दृष्टरश्मिवहिर्गतम् ।
किं च विम्बोर्ध्वदेशस्तु खमध्येऽस्ति यदा तदा ॥ ७२ ॥

अभावस्तन्मते भायाः कदाचिन्मध्यतः स च ।
प्राक्पश्चात्स भवेदित्थं नैवमानयनं क्वचित् ॥ ७३ ॥
द्युदले नतभागाश्चेद्बिम्बार्द्धाल्पा रवेस्तदा ।
तत्र बिम्बोर्ध्वदेशस्तु दिवार्द्धे हि खमध्यगः ॥ ७४ ॥
दिनार्द्धेऽर्कनताभावे बिम्बार्द्धाल्पनतेऽपि वा ।
मध्यादुभयतो यस्माद्बिम्बार्द्धूननतसंभवः ॥ ७५ ॥
खमध्ये बिम्बकेन्द्रं चेच्छाया नैवास्ति नुः सदा ।
तद्रीत्या संभवो भायाः कथं तच्छाप्रसाधनम् ॥ ७६ ॥
या च तद्रीतितः छाया सा च किं दिग्भवा स्मृता ।
शङ्कग्रात्सर्वबिम्बोर्ध्वदेशानां च समत्वतः ॥ ७७ ॥
परस्परविरोधेन तदेका निश्चयात्किल ।
अभाव एव तच्छायाः स्वीकार्यस्तत्र धीमता ॥ ७८ ॥
अथ शङ्कग्रतः सूत्रं बिम्बगोलस्य मध्यगम् ।
तत्तु तद्गोलपृष्ठे स्याद्यत्र लग्नं स एव हि ॥ ७९ ॥
गोलार्द्धाल्पकबिम्बस्य मध्यदेशोऽत्र कल्प्यते ।
ततः शङ्कग्रगो भूमौ स्पृष्टो मध्यकरश्च सः ॥ ८० ॥
एवं शङ्कग्रतः सूत्रं गोलपृष्ठे स्पृशद्गतम् ।
समन्ततश्च तत्पृष्ठे जातं यद्बिम्बनेमिजम् ॥ ८१ ॥
मण्डलं तद्गता ये च करास्तेषां च मध्यजात् ।
दूरत्वात्तत्प्रभावोऽल्पस्तेन मध्यकरस्य च ॥ ८२ ॥
सामर्थ्याधिक्यतस्तत्र छाया तद्वशतो भवेत् ।
नान्यात्तदूर्ध्वदेशात्स्यादन्यथानुपपत्तितः ॥ ८३ ॥
एवमूर्ध्वैकदेशं तु त्यक्त्वा सर्वं हि मण्डलम् ।
मेघाच्छन्नं तदा तत्र तद्देशोद्भवरश्मितः ॥ ८४ ॥

शङ्कुदिग्भा भवेन्नान्यादित्थं प्रत्यक्षतः स्फुटम् ।
एवं तिर्यगधोदेशाद्बिम्बनेमिस्थितादपि ॥ ८५ ॥
तिर्यगूर्ध्वानुगा सा स्यात्तद्भिन्नानुक्रमात्किल ।
आसन्नवलवन्मध्यच्छायाभावेऽन्यभा त्वियम् ॥ ८६ ॥
अतो बिम्बकुमध्यस्पृक्मध्यसूत्रानुसारतः ।
तदूर्ध्वनेमिजैः सर्वैः करैरेव कुभा भवेत् ॥ ८७ ॥
गोलज्ञवर्यगणसंसदि संस्थितानां
नैवोचितं यदिह गोलविरोधसिद्धम् ।
तत्रार्षगोलजनिताद्धि विरुद्धमार्यै-
स्त्याज्यं सदैव निजनिर्मितसन्निबन्धे ॥ ८८ ॥

इति श्रीकमलाकरविरचिते सिद्धान्ततत्त्वविवेके छायाधिकारः ॥

अथ शृङ्गोन्नत्यधिकारः ।

स्वतस्तैजसादर्कगोलात्सदाल्पो-
विधोर्नीरगोलोऽर्करश्म्यन्तरे यः ।
सहस्रांशुदिश्यस्य चार्द्धाधिकं यद्
भवेदुज्ज्वलं सोर्ध्वतद्रश्मिसङ्गैः ॥ १ ॥
तदर्द्धाल्पकं चान्यदिक्स्थं रवेर्य-
त्त्वशुक्लं स्वभान्तः स्थितं सर्वदैव ।
सितं चासितं वोध्यमर्काल्पकानां
तदन्याम्बुगोलात्मकानामपीत्थम् ॥ २ ॥
अमान्ते विधोरूर्ध्वखण्डं सितं स्या-
द्रवेरेकराश्यंशलिप्तादियोगात् ।
अधः संस्थितं चासितं रश्मियोगा-
दथैवं रवेरिन्दुदेशाद्गृहाद्यैः ॥ ३ ॥

विभिन्नो यथा शुक्लवृद्धिस्तथा स्या-
द्दूरासन्मुखे ह्यम्बुभीतांशुबिम्बे ।
विधोर्गोलकत्वाद्यदर्द्धाल्पशुक्लं
भवेत्तद्धि शृङ्गद्वयाकारमत्र ॥ ४ ॥

इन्द्वर्कबिम्बान्तरसूत्रमुक्तं यद्भाधिकारेऽत्र तदेव योग्यम् ।
सुसूक्ष्मशुक्लानयनप्रसिद्ध्यै तथेन्दुभान्वोः स्फुटमन्तरं च ॥ ५ ॥

गर्भैकसूत्रस्थितयोर्हि कर्णान्तरं तु बिम्बान्तरसूत्रमूक्ष्मम् ।
षड्भान्तरे तु श्रवणैक्यमेवं तत्कर्णवर्गैक्यपदं त्रिभे स्यात् ॥ ६ ॥

तिर्यक्स्थितोऽर्को विधुतस्तदा तु तत्कर्णयोर्वर्गवियोगमूलम् ।
इत्थं तदेकानयनेन चोक्तमिष्वग्रगेन्दोः खलु भाधिकारे ॥ ७ ॥

भूसम्मुखं भूस्थितदृष्टियोग्यं यद्बिम्बगोलस्य च खण्डकं तत् ।
बिम्बं भवेद्दर्शविरामकाले तत्रैव शुक्लं च यथायथार्कात् ॥ ८ ॥

विधुर्विभिन्नोऽस्ति तथातया त-
द्बिम्बं भवेच्छुक्लमिदं हि पूर्णम् ।
स्यात्पूर्णिमान्ते त्वथ तत्त्रिभेऽर्का-
च्चिरन्तनार्याः कथयन्ति चार्द्धम् ॥ ९ ॥

नैवं नवीनास्तु यतोऽर्ककक्षातुर्ये विचन्द्रश्रवणान्तरे हि ।
देशे भवेत्तिर्यगिनो यतोऽब्जात्पादोनषड्भाष्टलवान्तरेऽतः ॥ १० ॥

दलं नृदृश्यस्य दलस्य शुक्ल-
मत्रापि सूक्ष्मं वदतां मते तु ।
अर्द्धाधिकत्वाच्च सितस्य सम्य-
गदलं न शुक्लं नरदृग्जबिम्बे ॥ ११ ॥

त्रिज्येन्दुकर्णाहतिरर्ककर्णोद्धृताप्तचापांशविहीनखाङ्काः ।
ज्ञेयास्तदल्पा विधुशृङ्गयोग्याश्चन्द्रार्कजस्पष्टवियोगभागाः ॥१२॥

सिताख्यवृत्तं तु विहाय पूर्वः पादोनषट्काष्ठलवाल्पभागाः ।
भवृत्तचन्द्रार्कवशात्सुखार्थं सदादृता मध्यमकर्णतस्ते ॥ १३ ॥
रवेर्मण्डलं चन्द्रगोले प्रकल्प्य कुगर्भीयदृक्सूत्रमध्यस्थितं हि ।
ततश्चन्द्रबिम्बेन साकं च तस्य युतिग्रासपूर्वं कृतं तत्त्वविद्भिः ॥ १४ ॥
ययोः स्पर्शनाद्ये कृतेऽप्यत्र हानि-
र्न दृग्जैकसूत्रस्थतद्वास्तवेऽस्य ।
सदा गर्भदृग्वान्तरे बिम्बलिप्ताः
समा एव चन्द्रार्ककक्षावशात्ताः ॥ १५ ॥
नृदृक्सूत्रमध्ये तु तद्वच्च रव्यो-
रतुल्याः कलाः स्वस्वगोलस्थितास्ताः ।
तथाप्यत्र दृक्सूत्रसम्बन्धतोऽपि
भवृत्तस्थितास्ताः समानास्तयोः स्युः ॥ १६ ॥
इदं वासनापूर्वकं बिम्बभानु-
ग्रहैक्याधिकारेष्वपि व्यक्तमुक्तम् ।
परं त्विन्दुगोलस्थितेन्द्वर्कबिम्बो-
द्भवं सूचकं नैव सच्चन्द्रभान्वोः ॥ १७ ॥
स्फुटस्वस्वकक्षास्थयोस्तेन तत्र
कृतं जिष्णुजार्यैस्तु तन्नैव सम्यक् ।
विधोः कल्किकामानमल्पं रवेस्त-
न्महद्योजनैस्तत्र तद्योजनस्य ॥ १८ ॥
तदेकं च मानं हि संख्याविभेदाः
कलामानभेदे तु संख्या समा स्यात् ।
अथ स्वस्वगोलप्रमाणात्स्वबाहुः
स्वशङ्कुश्च लिप्तामयो नान्यमानात् ॥ १९ ॥

भुजैक्यान्तरात्स्पष्टबाहुः कृतो यः
कथं चिन्न स खस्वगोलोत्थशङ्क्वोः ।
भवेदन्तरं दक्षिणोदक्तथोर्ध्वा-
धरं शङ्कुयोगान्तरात्कोटिमानम् ॥ २० ॥

कथं चिन्न तत्तज्जकर्णप्रमाणं
कथं वास्तवेन्द्वर्कयोर्मध्यसूत्रम् ।
विजातीययोगान्तरादेव सिद्धि-
र्यदि स्यात्त्वदिष्टस्य तत्संशृणु त्वम् ॥ २१ ॥

यदा भवृत्तं सममण्डलाभं
खमध्यतस्तत्र समैर्नतांशैः ।
प्राक्पश्चिमस्थौ भवतो रवीन्दू
पादोनषट्काष्टदलाल्पभागैः ॥ २२ ॥

शिरोमणौ तत्र न तद्रवीन्द्वोर्दृष्टान्तरं तच्छ्रवणोन्मितं हि ।
दोःकोट्यभावेन तदीयकर्णाभावादथान्यत्र तथैव नूनम् ॥ २३ ॥

पादोनषट्काष्टलवाल्पके या
शृङ्गोन्नतिस्तत्र तदुक्तसूत्रम् ।
कर्णस्य तद्वास्तवचन्द्रभान्वोः
केन्द्रान्तरे नैव भवेदतोऽसत् ॥ २४ ॥

वैजात्यसंस्कृतिभवाविह कोटिबाहू
सूर्येन्दुमानयुतिखण्डवदित्यदोषः ।
इत्थं वदन्ति तदसद्धि यतोऽर्कबिम्बं
यत्कल्पितं बुधवरैः शशिगोलगं तत् ॥ २५ ॥

तद्गोलजातपरिधेः कलिकाप्रमाणा-
त्साजात्यमेव तु तयोस्तनुजं प्रसिद्धम् ।

यद्दृष्टिसूत्रवशतः कलिकार्कविम्बं
वेद्यं तदेव हि बुधैर्हिमरश्मिगोले ॥ २६ ॥
अत्रेन्दुगोलस्थितचन्द्रभान्वो-
र्मध्ये च यज्जिष्णुसुतोक्तसूत्रम् ।
तेनापि तुल्यं नहि भास्करोक्तं
किं तन्निरुक्तं तदहं न वेद्मि ॥ २७ ॥
प्रोक्तं पूवः स्थूलमुक्तं सुखार्थं
पारम्पर्येणोपदेशादथात्र ।
बाणाग्रस्थेन्दोः सुसूक्ष्मं यथा त-
च्छृङ्गं वक्ष्ये पण्डितानां सुखार्थम् ॥ २८ ॥
प्रश्नाधिकारोदितवदृग्घार्कान्तरं त्विह व्यर्कविधुं प्रकल्प्य ।
कार्यं तु विम्बान्तरवृत्तमार्यैश्चन्द्रार्कयोरन्तरकं स्फुटं च ॥२९॥
तदन्तरज्या रविकर्णनिघ्नी चन्द्रार्कविम्बान्तरसूत्रभक्ता ।
लब्धस्य चापं विधुवृत्तसंस्थं तद्भागति*थ्यंशमितं सितं स्यात् ॥३०॥
आद्ये तथान्त्ये च पदे स्फुटाख्ये
चन्द्रार्कजाते विवरे तदेव ।
अर्काद्विशुद्धं च यथागतं स्या-
त्सितं द्वितीये च पदे तृतीये ॥ ३१ ॥
पदान्यथ त्रिज्यकयोक्तपद्याद्ये चापभागास्त्रिभतो विशुद्धाः ।
आद्यं चतुर्थं त्रिभयुक्तभागा द्वितीयकं चाथ तृतीयकं च ॥ ३२ ॥
व्यस्तं सितादप्यसकृद्विधानाद्यर्केन्दुविम्बान्तरवृत्तयोश्च ।
स्थानं यथा स्यादचलं तथा तत्कुशाग्रधीभिर्गणितेन साध्यम् ॥३३॥
यदा त्रिभज्याभ्यधिका ज्यका स्यात्तदा त्रिभज्योनितया तयात्र ।

---

* वास्तवासितमानार्थं मत्कृतं वास्तवचन्द्रशृङ्गोन्नतिसाधनं द्रष्टव्यम् ।

द्विवारं क्रान्तिसाम्यं स्याद्विषुवत्सन्निधौ यदा ।
तदा पातद्वयं सौरे प्रोक्तं तच्चान्यथा न तत् ॥ ७ ॥
चण्डशीतकिरणोत्थमध्यमक्रान्तिसाम्यसमयोऽस्ति मध्यमः ।
पातकाल इह राशिमण्डले भानुरस्ति सततं न चन्द्रमाः ॥ ८ ॥
ततः स वाणाग्रगतस्य तेन स्फुटापमस्तस्य च तीक्ष्णभानोः ।
मध्यापमेनैव समो यदा स्यात्तदा भवेत्स स्फुटपातकालः ॥ ९ ॥
साजात्यतोऽत्र ध्रुवगस्फुटेषो-
र्ध्रुवस्थिताद्यापमकानुरोधात् ।
चेत्साधनं तर्हि कदम्बवाणा-
नुरोधतः किं न कृतोऽपमोऽन्यः ॥ १० ॥
स्फुटापमान्योऽपि ततः स्फुटाद्यापमोक्तिवद्यत्कृतमत्र सर्वम् ।
अथान्यसंज्ञापमके च योऽस्ति स एव विज्ञ स्फुटपातकालः ॥११॥
किं नाहतश्चेद्ददसीह सूर्यानुक्तिं तदा रव्युदितापमेण्वोः ।
विभिन्नजात्योरपि तत्स्फुटत्वं गृहाण गोलज्ञ फलाय नूनम् ॥१२॥
कदम्बवाणेन सुसंस्कृताद्योऽपमो विधोः स्पष्टतरोऽत्र कल्प्यः ।
अर्काद्ययेषुस्फुटयुक्तिरुक्तान्यैः सा फलार्थं तु कुयुक्तिरेव ॥ १३ ॥
तत्तत्फलार्थं स्फुटता विभिन्ना
तज्ज्ञोऽस्ति कः श्रीपरमात्मनोऽन्यः ।
अर्कोक्तिभिन्नो ध्रुवगः शरोऽतः
स्पष्टापमार्थं नहि सोऽत्र युक्तः ॥ १४ ॥
त्रिघ्ना नखाप्ताश्चलभागकास्तै-
र्हीनाश्च सार्द्धत्रिभुवोऽ १३ । ३० द्रिपक्षाः २७ ।
धने चलांशे ह्यधने तु युक्ताः
क्रमाद्धि वैपातजसाम्ययोगौ ॥ १५ ॥

ऊर्ध्वाङ्कतुल्योऽत्र गतोऽस्ति योगस्तन्नाडिकाद्यं तु तदग्रिमस्य ।
तत्सर्वनाडीगुणितं च षष्ट्या हृतं स्फुटं तद्घटिकादि तस्य ॥ १६ ॥
नाड्यादितद्योगगते स्वमध्यपातस्य कालोऽवगतो य्रहज्ञैः ।
चन्द्रार्कमध्यापमयोः समत्वादमान्तपूर्णान्तकृतौ त्वनाप्तौ ॥ १७ ॥
अथोक्तमध्यापमसाम्यकालासन्नार्द्धरात्रिस्थरवीन्दुपाताः ।
पूर्वं प्रसाध्याः स्वचलांशकज्ञैः स्वस्पष्टपातावगमाय तस्मात् ॥ १८ ॥
प्रत्यंशजक्रान्तिशरोत्थखण्डैर्मध्यापमं तीक्ष्णरुचेर्विधोस्तु ।
स्पष्टापमाख्यं तु ततश्च कृत्वा ज्ञेयोऽर्कशाखाङ्कतगम्यपातः ॥ १९ ॥
अथात्रौजपदस्येन्दोः क्रान्तिर्विक्षेपसंस्कृता ।
यदि स्यादधिका भानोः क्रान्तेः पातो गतस्तदा ॥ २० ॥
ऊना चेत् सा ततो भावी वामं युग्मपदस्य तु ।
पदान्यत्वं विधोः क्रान्तिर्विक्षेपाच्चेद्विशुद्ध्यति ॥ २१ ॥
क्रान्त्योर्ज्ये त्रिज्ययाभ्यस्ते परक्रान्तिज्ययोद्धृते ।
तच्चापविवरं योज्यमेष्यपाते विधौ तथा ॥ २२ ॥
शोध्यं चन्द्रे गते पाते तत्सूर्यगतिसंगुणम् ।
चन्द्रभुक्तिहृतं भानोर्लिप्तादि शशिवत्फलम् ॥ २३ ॥
तद्वच्छशाङ्कपातस्य फलं देयं विधोरिव ।
एवं तदसकृत्तावद्यावत्क्रान्ती समे तयोः ॥ २४ ॥
उक्तचापान्तराभावात्तत्र यः केवलः शशी ।
स्पष्टपातोद्भवो वेद्यः प्राकृतस्त्वार्द्धरात्रजः ॥ २५ ॥
स्थिरीकृतार्द्धरात्रेन्द्वोर्द्वयोर्विवरलिप्तिकाः ।
षष्टिघ्न्यश्चन्द्रभुक्त्याप्ताः पातकालस्य नाडिकाः ॥ २६ ॥
निशीथकालादि ज्ञेयाः प्राक् पश्चात् पातजे विधौ ।
हीनेऽधिकेऽर्द्धरात्रेन्दोस्तत्र स्वस्वापमौ समौ ॥ २७ ॥

रवीन्दुमानयोगार्द्धं षष्ट्या सङ्गुण्य भाजयेत् ।
तयोर्भुक्त्यन्तरेणाप्तं स्थित्यर्द्धं नाडिकादिकम् ॥ २८ ॥
पातकालस्फुटो मध्यः स्थित्या हीनयुतो यदि ।
स्पर्शमोक्षौ भावेतां तन्मध्यकालोऽतिदारुणः ॥ २९ ॥
स्नानदानजपश्राद्धव्रतहोमादिकर्मसु ।
प्राप्यतेऽत्र महच्छ्रेयो मङ्गलेष्वतिनिन्दितः ॥ ३० ॥
आर्षस्फुटक्रान्तिविरोधतोऽत्रै-
भिन्नेन्दुगोलायनसन्धियुक्त्या ।
स्वकल्पितोऽसत्स्फुटपातकालः
स पुण्यदो नाप्यशुभदो न नूनम् ॥ ३१ ॥

इति श्रीकमलाकरविरचिते सिद्धान्ततत्त्वविवेके पाताधिकारः ॥

## अथ महाप्रश्नाधिकारः ।

अथ दिग्देशकालैस्तु यदर्थं गणितोद्यमः ।
विचित्रान् वच्मि तान्प्रश्नान् सोत्तरान् युक्त्यलङ्कृतान् ॥ १ ॥
अक्षभागमितिविद्गणकोऽग्राज्ञानतो वदति कोणनरं यः ।
सूक्ष्मगोलविधिना खलु मन्ये भास्करादिगणकेषु वरं तम् ॥ २ ॥
सर्वदैव शरवेदलवाः स्युर्दिग्लवा इह खगापमभागाः ।
स्वाग्रकाश्रवणतः किल सिद्धास्तद्द्वयोरवगमाच्च सुबोधम् ॥ ३ ॥
इष्टदिङ्नरकतानयनोक्त्या साधनं भवति कोणनरस्य ।
श्रीशिरोमणिकृता * त्वसकृद्यत्तत्सुखार्थमुदितं निजतन्त्रे ॥ ४ ॥

---

* अत्र विशेषः ।

युग्माश्विनाक्षप्रभावर्गनिघ्नी बाणाब्धयंशज्या द्विकाश्विभक्ता ।
अक्षच्छायावर्गयुक्तैः फलाच्चेदग्रा न्यूना स्यात्स्थलं सौम्यगोले ॥
यदि फलमधनं तद्याम्यगोलजाते फलत इह यदाग्राऽनल्पका द्युमर्के ।
भवति विबुधवन्द्यो वासना वासना यः सुगणक निगदेत्संसर्वैरेव तुल्यः ॥

दिग्लवस्वपलभापमभागज्ञानतो वदति चेष्टनरं यः ।
पूर्वदिङ्नरकृतानयनान्यरीतितः स च महान् गणकेषु ॥ ५ ॥
त्रिज्याखभाघ्नो स्वदिगंशमौर्व्या हृताखभा तां परिकल्प्य साध्या ।
अग्रज्यका तद्गुणितापमज्या स्वात्तज्ज्ययाप्ताथ तयोस्तु चापे ॥ ६ ॥
ताभ्यां दिनार्द्धीयनरोक्तिवज्ज्ञैर्नरस्य संसाधनमत्र कार्यम् ।
खगे सदैवोत्तरगोलयाते स्वाग्रात्पकायामथ दिग्ज्यकायाम् ॥७॥
इष्टापमांशा नवतेर्यदाल्पास्तदा खनागेन्दुविशोधितास्व ।
इष्टाशकास्तद्द्वयतस्व साध्यं शङ्कुद्वयं गोलविदा सुसूक्ष्मम् ॥ ८ ॥
ज्ञात्वा समक्रान्तिभवौ भुजौ तच्छङ्कू च तत्रांशलवान् द्रुतं मे ।
गोलज्ञवर्य प्रवदस्व तत्त्वविवेकरूपं यदि वेत्सि सूक्ष्मम् ॥ ९ ॥
एकान्यदिक्के तु भुजान्तरैक्यं शङ्क्वन्तराप्तं च सदैकगोले ।
अन्यैकदिक्कं तु भुजान्तरैक्यं शङ्क्वैक्यभक्तं च विभिन्नगोले ॥१०॥
अर्काहतं स्यात्पलभा विनिघ्नी त्रिभज्यया सा पलकर्णभक्ता ।
चापं पलांशाः खलु गोलरीत्या समापमत्वे भुजयोरिह स्युः ॥ ११ ॥
नोक्तं समत्वे भुजयोर्यथोक्त्या तत्साधनं प्रोक्तमिदं विभेदे ।
पलप्रभा वर्णमितेरिहोह्या सुवासनाशाद्वयसाम्यरीत्या ॥ १२ ॥
अथेष्टकालापमबाहुशङ्कून्
ज्ञात्वा पलांशान्प्रवदाशु यत्र ।
क्लिश्यन्ति वीजक्रियया वृथैव
स्वस्वाभिमानाद्दृढगोलविज्ञाः ॥ १३ ॥
फलीयपूर्वोक्तहरोऽत्र साध्यस्तदुद्धृते ते त्रिगुणाहते च ।
भुजापमज्ये धनुषोस्तयोश्च स्वदिक्स्थयोर्व्यस्तसुसंस्कृतेः स्युः ॥१४॥
अक्षांशकास्तत्र यदांशभागा ज्ञातास्तदा क्रान्तिरतो विलोमात्
विदन्ति ये गोलममुं सभेदं पश्यन्ति तेऽग्रे गणितं समग्रम् ॥१५॥

कृतायनांशग्रहबाहुजीवाद्युज्यापमज्यायुतिविद्बहुज्ञः ।
जानाति यः क्रान्तिगुणं सुशीघ्रं तं सर्वदैवज्ञवरं हि मन्ये ॥१६॥
पूर्वं परक्रान्तिलवोत्थजीवात्रिज्यायुतिं स्वेष्टयुतिं प्रकल्प्य ।
परापमज्या गुणितोक्तयुत्या भक्तेष्टयुत्यापमशिञ्जिनी स्यात् ॥१७॥

तज्जद्युजीवोनयुतिं युतिं च
मत्वोक्तवत्क्रान्तिगुणात् द्युजीवाम् ।
कृत्वा तदूनोक्तयुतेर्वशेना-
सकृत्स्थिरक्रान्तिगुणोऽतिसूक्ष्मः ॥ १८ ॥

क्रान्तिज्यावर्गमानाद्वा दोर्ज्या तद्योगवर्जिता ।
युतिस्तद्वर्गतद्द्युज्यावर्गसाम्यादियं स्फुटा ॥ १९ ॥

अक्षांशविद्वाङ्कनरप्रमाणं संवीक्ष्य यः क्रान्तिगुणं स दक्षः ।
जानाति तं दैवविदां वरिष्ठं विवेकतत्त्वज्ञमितीह मन्ये ॥ २० ॥
पूर्वोक्तहारेण हृताग्निमौर्व्या निघ्नाद्भुजाच्चापमिह स्वदिक्स्थम् ।
अक्षांशकैर्व्यस्तसुसंस्कृतं तज्ज्यका हरघ्नी त्रिभजीवयाप्ता ॥२१॥
लब्धं भवेत् क्रान्तिगुणोऽथ दृग्ज्या दिगंशकोटिज्यकया हताप्ता ।
त्रिभज्यया चापलवा अतो ये खाङ्कच्युतास्तद्गुण एव हारः ॥ २२ ॥
सहस्रभानौ सममण्डलस्थे नतासुदोर्ज्याक्षलवज्यकाज्ञः ।
क्रान्तिज्यकामानयतीह तं च सिद्धान्तविद्वर्यमहं हि मन्ये ॥ २३ ॥
नतासुदोर्ज्या त्रिभजीवयाप्ता त्रिज्या तथाक्षज्यकया विभक्ता ।
तद्वर्गयोरन्तरमूलभक्ता नतासुजाता किल कोटिजीवा ॥ २४ ॥
क्रान्तिज्यका स्यान्मम संमतेयं सहस्रभानौ सममण्डलस्थे ।
परैरिदं चानयनं प्रयत्नात्कृतं स्वबुद्ध्या स्वक्रान्तौ न सम्यक् ॥ २५ ॥
अक्षांशकघ्नेन चरांशजीवां ज्ञात्वापमज्यानयनं यथोक्त्या ।
कार्यं चरज्यार्कहता गुणः स्यात्त्रिभज्यया सङ्गुणिताक्षभा च ॥२६॥

तद्वर्गयोर्योगपदेन भक्ता
त्रिज्या गुणघ्नी त्वपमज्यका स्यात् ।
चापं भवेत्क्रान्तिरिमां विदित्वा
चरासवोऽप्यत्र विदां सुबोधाः ॥ २७ ॥

अक्षांशवित् क्रान्तिगुणं विदित्वा जानाति शङ्कुं नतकालमानम् ।
यस्तीक्ष्णरश्मौ सममण्डलस्थे बुधास्तु तं कल्पकमामनन्ति ॥२८॥

त्रिज्यापमज्याहतिरक्षजीवा-
भक्ता नरः स्याच्च ततोऽस्य दृग्ज्या ।
सा त्रिज्ययाघ्नी विहृता द्युमौर्व्या
तच्चापलिप्ता नतजासवः स्युः ॥ २९ ॥

पलप्रभा* लम्बगुणाक्षजीवायोगं विदित्वा पलभावबोधः ।
कर्णस्य वर्गात् द्विगुणाद्विशोध्येत्यनेन सद्यैवविदां सुबोधः ॥ ३० ॥

प्राग्युक्तरीत्या पललम्बमौर्व्योस्तद्वाङ्कयोस्त्वोद्विगुणश्रुतेस्त्र ।
ज्ञानाद्भवेत्तच्च यथा द्विनिघ्नत्रिज्याकृतेः शोध्ययुतेस्तु वर्गम् ॥३१॥

तन्मूलहीना सहिता युतिस्त-
द्दले किलाक्षांशकलम्बमौर्व्यौ ।
स्वपृष्ठकेष्वावशतोऽवगम्ये
हीनाधिके चाभ्यधिकाल्पिके वा ॥ ३२ ॥

अक्षज्यकार्काभिहता विभक्ता

---

* अत्र विशेषः ।

त्रिज्यावर्गाद् द्विनिघ्नाच्च युतिवर्गोऽधिको यदा ।
नात्र सिद्धिरतो ब्रूते नवीनां सुगमक्रियाम् ॥
त्रिज्याविहीनेष्टयुतिं पलप्रभां
प्रकल्प्य साध्ये पललम्बजीवके ।
तद्योगहीनेष्टयुतिं पलप्रभां
प्रकल्प्य साध्याऽसकृदेवमक्षभा ॥

लम्बज्यया स्यात्पलभा द्विधा सा।
अर्काक्षिपका वाभ्यधिकार्कतः स्या-
न्न्यूनाधिकत्वेऽग्रगुणस्य लम्बात् ॥ ३३ ॥
पलप्रभां तां प्रविशोध्य योगान्मत्वाथ तां योगमितिं पुनश्च ।
यथोक्तवत्स्यादसकृद्विधानात्पलप्रभेत्थं कथयन्ति विज्ञाः ॥ ३४ ॥
भास्करेऽथ सममण्डलयाते तन्नतोन्नतलवान्समवेत्य ।
तन्नतासुमितिविङ्गुणितज्ञ क्रान्तिमानय तथा पलभां च ॥ ३५ ॥
तन्नतासुगुणहृत् त्रिगुणघ्नी सा समाख्यवृतिजा नतमौर्वी ।
द्युज्यका भवति यापमजीवा स्यात्समोन्नतगुणेन विभक्ता ॥ ३६ ॥
सा गुणा त्रिभगुणेन पलज्या तद्वशादपमतत्पलभे स्तः ।
अत्र यैरसकृदुक्तित उक्तं तन्न सम्यगिति गोलविदोक्तम् ॥ ३७ ॥
कुजीवोनितां तद्धृतिं कुज्यकां च
विदित्वा वदाक्षप्रभां व्यक्तरीत्या ।
कृतेन्द्राहता तद्धृतेरूर्ध्वखण्डो-
द्धृता कुज्यका तत्पदं स्वाक्षभा स्यात् ॥ ३८ ॥
सजातीयजात्येषु कोट्यङ्ककानां
स्वबाह्वद्धृतानां समा लब्धयः स्युः ।
अतो येन हारेण भक्तोऽर्कशङ्कु-
र्भवेदक्षभा तद्धृतिः कुज्ययोना ॥ ३९ ॥
विभक्ताथ तेनापमज्या भवेत्सा
पुनस्तेन भक्ता कुजीवाथ तस्मात् ।
कुजीवोनिता तद्धृतिर्भाजिता त-
द्धरस्यैव वर्गेण कुज्याथ वा स्यात् ॥ ४० ॥
कृता हारवर्गस्य बोधार्थमत्र

कुजीवोनिता तद्धृतिः कुज्ययाप्ता ।
हरे वर्गरूपेऽर्कशङ्कोस्तु वर्गो-
भवेद्भाज्य आप्तं कृतिस्वात्तभायाः ॥ ४१ ॥

पदं चाग्रभेत्थं हि गोलप्रवीणै-
र्नरैस्त्रोपपत्तिः प्रवाच्या सुबोधा ।
अनल्पा विदां कल्पनैवास्ति मुख्यं
सुबीजं न तत्केवलं वर्णरूपम् ॥ ४२ ॥

प्रविदितनरमानाज्ज्ञाततन्नासुमाना-
त्खपललवविदत्र ब्रूहि मे क्रान्तिजीवाम् ।
द्विविधगणितगोलज्ञान्यसत्तान्त्रिकेभ्योऽ-
धिकतरममलं चेत्त्वं विजानासि विद्वन् ॥ ४३ ॥

नतासुकोटिज्यकया विनिघ्नी लम्बज्यका भाज्य इहोद्धृतोऽसौ ।
त्रिभज्यया तत्कृतिरक्षजीवावर्गेण युक्ता हरसंज्ञकः स्यात् ॥४४॥

भाज्यस्य वर्गस्त्रिगुणघ्नशङ्कु-
वर्गोनितो हारहृतः स चाद्यः ।
त्रिज्याक्षजीवाहतशङ्कुराप्तो
हारेण सोऽन्योऽस्य कृतिर्युताद्ये ॥ ४५ ॥

तन्मूलमन्येन युतं विहीनं गोलक्रमेणापमशिञ्जिनी स्यात् ।
यदाल्पमन्यात्पदमत्र साम्ये तदा पदेनापि विहीनितोऽन्यः ॥४६॥

क्रान्तिज्यका स्याद्द्विविधं तदित्थं
क्वचिच्च सत्यादथ चोन्नतास्वेत् * ।

---

* अत्र विशेषः ।

उन्नतासूत्क्रमज्याहताक्षप्रभा साक्षकर्णोन्नतासुज्यकाघातहृत् ।
त्रिज्यकाघ्नी ततो भादलैर्वद्धनुर्यौमताऽऽग्रः प्रकल्प्योऽस्य कोटिज्यका ॥
शङ्कुगुण्याक्षकर्णेन गुण्या हता सूर्यगुण्योन्नतासुज्यकास्य या ।

ज्ञातासवस्तद्वधसकृत्सुबोध-
माद्योक्तयुक्त्यैव विदां प्रसिद्धम् ॥ ४७ ॥
अथैकजातिजात्येषु भुजयोगं भुजं बुधैः ।
कोटियोगं तथा कोटिं कर्णयोगं तथा श्रुतिम् ॥ ४८ ॥
कल्पयित्वा ततोऽप्यन्यतज्जात्यैकाववबोधतः ।
अनुपातात्तदन्यौ च ज्ञेयौ वस्तुफलाश्रितः ॥ ४९ ॥
एवं तज्जात्ययोर्ये च कर्णदोःकोटिजैक्यके ।
तज्ज्ञानाच्च तयोरेकत्रितयान्यतरस्य च ॥ ५० ॥
यस्य ज्ञानात्तदन्यस्य तस्यैव ज्ञानमस्त्यलम् ।
सिद्धैक्यं साध्ययोगघ्नं सिद्धयोगहृतं च तत् ॥ ५१ ॥
पलक्षेत्रेषु यत्र स्यात् सिद्धयोगस्तु कोटिजः ।
बाहुजः साध्ययोगः स्यात्तत्र साध्योऽर्कसंगुणः ॥ ५२ ॥
सिद्धहृत्पलभा ज्ञेया साध्यश्चेत्कर्णजस्तदा ।
साध्योऽर्कघ्नः सिद्धहृतः पलकर्णो भवेद्ध्रुवम् ॥ ५३ ॥
अथ वात्र पलक्षेत्रे तत्रैक्यज्ञानतः किल ।
ज्ञानं दोःकोटिकर्णानां प्रवदाशु विदां वर ॥ ५४ ॥

---

चापकोटिर्द्विधा साद्ययुक्तोनिता गोलयोरग्रकांशा भवेयुः क्रमात् ॥
चापकोटिर्यदाल्पाद्यमानात्तदा तद्युतिस्तद्वियोगश्च मानद्वयम् ।
सौम्यगोलेऽग्रकाचापजातं सदा जायते चेत्पराग्रांशमित्यल्पकम् ॥

यथा श्रीभास्करोक्ते पञ्चाङ्गुला गणक यत्र पलप्रभा स्यादित्यादिप्रश्ने लघुरिक्थेन,
$\frac{\text{वि.उउ.त्रि}}{\text{पक.उज्या}}$ = ०·३४६४६६० = स्पआ ततो भादलैः स्पर्शरेखाखण्डैर्धनुराद्यसंशं = १२ ।
३१ । ११लवाद्यं ततस्तेनैव लघुरिक्थेन $\frac{\text{पक.कोज्याआ·शं}}{\text{१२ उज्या}}$ = ०·९८०९६६९८
= कोज्या (अग्रा $\pm$ आ) ततश्चापकोटिः = १२ । १९ । ३८ लवादिका इयं तु आद्यमा-नादल्पा तेन तयोर्योगः = २४ । ५० । ४९ अन्तरं च = ० । ११ । ३३ द्विविधाग्रा-शमितिरुत्तरैव ताभ्यामनुपातेन सौम्ये क्रान्तिमाने प्रक्रा = २२ । ४२ । २० द्विक्रा = ० । १० । ४० एते द्वे अपि समीचीने परक्रान्तितोऽल्पत्वात् ।

अर्काक्षभाश्रवणानां युत्या भक्तास्त एव हि ।
उद्दिष्टयुतिनिघ्नाः स्युः कोटिदोःश्रुतयः पृथक् ॥ ५५ ॥

अथान्तरं * साक्षकुजे भयोर्य-
त्कुतश्च याम्योत्तरगं तदल्पम् ।
संदृश्यते तद्वद मित्र युक्त्या
यद्यस्ति गोले गणितेऽभिमानः ॥ ५६ ॥

कुजेऽग्रकांशान्तरयोगतुल्यं याम्योत्तरे क्रान्तिलवान्तरैक्यम् ।
एकान्यदिक्के क्रमतस्तदस्मात्सदाधिकाल्पं तु समं निरक्षे ॥५७॥

ऋक्षयोरपि कदम्बकसूत्रज्ञातसद्ध्रुवकबाणकयोर्हि ।
यत्र गर्भजकुजेऽभ्युदयौ स्तस्त्वैककालवशतोऽवनिदेशे ॥ ५८ ॥

तत्र गोलगणितागमविज्ञावांशकान् प्रवद चेन्निपुणोऽसि ।
सद्ध्रुवाङ्कविवरोत्थजीवैकस्य बाणभवकोटिजमौर्व्या ॥ ५९ ॥

सङ्गुणा त्रिभगुणेन विभक्ता लब्धचापभवकोटिगुणाप्ता ।
तद्भवाणभवदोर्ज्यकयाप्ता त्रिज्यका फलधनुर्लवपूर्वम् ॥ ६० ॥

तत्परेषुविवरं हि दिगैक्ये बाणयोर्युतिरिहाथ विभेदे ।
तज्जकोटिगुणसंगुणितोक्तलब्धचापभवकोटिगुणाख्या ॥ ६१ ॥

त्रिज्यया च विहृताप्तजचापांशोनिता नवतयस्तु भयोः स्यात् ।
अन्तरं भवति दृग्वृतिजं तच्चैकभं हि परिकल्प्य खमध्ये ॥ ६२ ॥

अन्यभं किल तदन्तरभागैः स्यान्नतं कुरु ततो गुणमत्र ।
यौ भयोर्हि विषुवांशकसंज्ञौ विम्बजाविह तदन्तरभागैः ॥ ६३ ॥

या ज्यकान्यभभवस्फुटसंज्ञक्रान्तिजद्युगुणसङ्गुणिता सा ।
खस्थितस्फुटतरापमजातद्युज्यया च गुणिता पुनरेव ॥ ६४ ॥

---

* अत्र विशेषः ।

यदा युगपन्नक्षत्रद्वयं क्षितिजे स्यात् तदा तयोर्दिनार्धमाने न समाने अतस्तन्नक्षत्र-द्वयं युगपद्याम्योत्तरवृत्ते न यास्यति ततोऽयं प्रश्नः खिलः ।

तन्नतांशकगुणत्रिगुणाभ्यां भाजिता भवति चाक्षलवज्या ।
भूजसंस्थितभयोरथ लम्बज्या समाख्यन्तु निजाक्षलवज्या ॥ ६५ ॥

ज्ञाताक्षांशस्वप्रदेशाद्दिगंश-
ज्ञानस्त्वेष्टाशास्थितो योऽन्यदेशः ।
तस्याक्षांशान् शीघ्रमाचक्ष्व विद्वन्
देशाभ्यन्तर्योजनज्ञोऽसि चेत् त्वम् ॥ ६६ ॥

अत्रेष्टदिक्संस्थितभिन्नदेश-
स्वदेशयोरन्तरयोजनानि ।
इन्द्रै १४ र्विभक्तानि लवास्त्व तेषां
ज्या दृग्ज्यका सा सुधियावगम्या ॥ ६७ ॥

तद्भिन्नदेशाख्यखगस्य तत्र
खमध्यसंस्थान्निजदेशतस्त्व ।
दिगंशकोटिज्यकया विनिघ्नी
दृग्ज्या त्रिभौर्व्या विहृताप्तचापम् ॥ ६८ ॥

तत्कोटिजीवोदित एव हार-
स्तद्भुजा दृग्ज्यकया विनिघ्नी ।
दिग्ज्याप्तचापं त्विह फलं स्वदिक् स्या-
त्त्वाक्षयोरेकविभिन्नदिक्के ॥ ६९ ॥

वियोगयोगः किल तस्य जीवा हराहताशा त्रिगुणेन लब्धम् ।
अक्षज्यका स्यादिह भिन्नदेशस्य चापमज्याप्तधनुः पलांशाः ॥७०॥

खाङ्काधिकाश्चेदिह योजनांशा-
स्तदोदितव्यस्तमुसंस्कृतेस्त्व ।
यथोक्तवत्तत्र पलांशकाः स्यु-
र्यतोऽन्यदेशोऽस्ति कुजाद्धरतात् ॥ ७१ ॥

यो देशयोर्ज्ञातपलांशयोर्दिग्-
ज्ञानाद् बुधोऽन्तरयोजनानि ।
ज्ञात्वाथ तज्ज्ञानवशात्पुनस्त-
द्दिग्भागकान् यो वदति ध्रुवं सः ॥ ७२ ॥

ध्रुवेन्द्र एवाकलने भचक्र-
गोलस्य वेद्यस्त्विह नो तदन्यः ।
खेटोऽन्यदेशेऽपमभागकास्त-
त्पलांशकास्तत्र नतांशमानम् ॥ ७३ ॥

दिगंशकज्ञानवशात्सुबोधं
त्रिप्रश्नजप्राग्गणितेन नूनम् ।
तज्ज्ञानतोऽग्रानृतलोऽस्य बाह्वो-
र्दिग्ज्ञानमप्यस्ति सुबोधमत्र ॥ ७४ ॥

आद्यप्रश्ने सौम्यगोले दिग्ज्याग्राल्पा तदा सदा ।
निश्चयेन द्विधा मानमुदितं तन्न मन्मतम् ॥ ७५ ॥

स्वापमे परतुल्ये तु व्यभिचाराद्वृथा भ्रमात् ।
एकाहोरात्रदृग्वृत्तयोगादेकनरो यतः ॥ ७६ ॥

ज्ञाताक्षांशस्वीयदेशादभीष्ट-
ज्ञाताक्षांशे कश्चिदस्तीह देशः ।
कैर्दिग्भागैर्दिग्विभागेऽथ कस्मिन्
स्वस्थानात् कैर्योजनैश्चापि तत्तत ॥ ७७ ॥

तत्तत्स्थानप्रोक्तनूलांशविज्ञ ब्रूहि त्वं मे सत्वरं चातिसूक्ष्मम् ।
ज्ञात्वा सम्यक् सद्विवेकस्य तत्त्वं चापक्षेत्रज्ञातगोलप्रपञ्चैः ॥ ७८ ॥

स्वाभीष्टदेशोद्भवनूलभागा-
न्तरज्यया सङ्गुणिता विभक्ता ।

त्रिभज्ययेष्टाग्रजलम्बमौर्वी
तच्चापमाद्योऽस्य च कोटिमौर्वी ॥ ७९ ॥
हरो भवेत्तेन हृतेष्टदेशा-
ग्रज्या त्रिमौर्व्या गुणिताग्रचापम् ।
इष्टान्यदिक्लवसंस्कृतानां
स्वाक्षांशकानामिह या ज्यका स्यात् ॥ ८० ॥
हराहता सा त्रिगुणेन भक्ता लब्धाद्यवर्गैक्यपदस्य चापम् ।
लवाद्यमिन्द्रै १४ गुणितं भवन्ति तद्देशयोरन्तरयोजनानि ॥ ८१ ॥
लब्धं त्रिभज्यागुणितं पदाप्तं तदाप्तचापं तु दिगंशकाः स्युः ।
सुसंस्कृतस्वाक्षजदिक्स्थितास्वेत्स्वकीयदेशोऽङ्कवदल्पमल्पम् ॥८२॥
तदेष्टदेशः स्वपुराद्भवेत्प्राक्
तदन्यथा पश्चिमदिक्स्थितः स्यात् ।
तत्पूर्वचिह्नात्परचिह्नतो वा
साद्बद्विदस्राल्पलवर्दिगंशैः ॥ ८३ ॥
स्वदिग्भवैः संव्यवहारहेतो-
र्दिक् प्राक्परा सैव विदावगम्या ।
साद्भाद्रिषट् ६७। ३० दिग्लवकोर्ध्वगस्तु
दिगंशदिग् या खलु सैव दिक् स्यात् ॥ ८४ ॥
सार्द्धद्विदस्रोर्ध्वगसार्द्धशैलषडल्पकैर्दिग्लवकैस्तु दिक् स्यात् ।
तदन्तरे कोणभवा फलार्थमित्थं विचिन्त्यं सुधियातिसूक्ष्मम् ॥८५॥
प्राक्साधितो दर्शविरामकालः स्फुटोऽत्र यल्लम्बनसंस्कृतः स्यात् ।
तल्लम्बनं गर्भजलग्नतुल्ये रवौ निरुक्तं परमं सदार्यैः ॥ ८६ ॥
त्रिभोनलग्नेन समे रवौ तु सद्गोलरीत्या तदभाव एव ।
सूर्यादितल्ले किल मध्यलग्नं तद्वित्रिभं खं त्विह मध्यसंज्ञम् ॥८७॥

इति स्फुटार्थे वचनेऽप्यबोधा-
स्तैरं मतं नाश्रितमार्यमुख्यैः ।
प्रामाण्यतो यद्वचनस्य विष्णो-
र्भक्तौ विनष्टाः किल वैष्णवाख्याः ॥ ८८ ॥

सवासनं ये प्रविदन्ति गोलं मध्याख्यजीवानयनाय ते तु ।
गृह्णन्ति खाङ्गं किल मध्यसंज्ञमन्यत्र तद्वित्रिभमध्यलग्नम् ॥ ८९ ॥

ये गोलजक्षेत्रविचारशून्याः सर्वत्र तेऽभ्राङ्गकमेव चाहुः ।
ये वित्रिभाभ्राङ्गजसंशयस्थास्तैस्तद्द्वयं प्रोह्य कृतं तृतीयम् ॥ ९० ॥

दृग्लम्बसंज्ञं स्फुटवित्रिभाङ्गं तत्स्वत्रिभं दृग्भवलग्नकं च ।
यथा भवेत्स्वत्रिभवित्रिभाङ्गं स्वलग्नकं तद्वदिहापि बोध्यम् ॥ ९१ ॥

तत्साधनं चेह यदभ्रवित्रिगृहाङ्गभागान्तरसंस्कृतं तत् ।
त्रिभोनलग्नं खविलग्नकं च स्यात्तद्दिनार्द्धे न तथेष्टकाले ॥ ९२ ॥

अतोऽन्तरं चोन्नतकालमौर्व्या गुणं हृतं त्रिज्यकया लवाद्यम् ।
हीनाधिके खात्त्रिभहीनलग्ने युतोनितं तत्त्रिभहीनलग्नम् ॥ ९३ ॥

दृग्लम्बसञ्ज्ञं त्रिभयुक्तमेतद्दृग्लग्नसञ्ज्ञं परलम्बनार्हम् ।
यथा रवौ स्वोदयलग्नतुल्ये विलम्बनं स्यात्परमं तथैव ॥ ९४ ॥

दृग्लग्नतुल्ये द्युमणौ परं तद्विलम्बनं संविहितं स्वतन्त्रैः ।
एवं यथा वित्रिभलग्नतुल्ये रवावभावोऽस्ति विलम्बनस्य ॥ ९५ ॥

तथैव दृग्लम्बसमे रवौ तु विलम्बनाभाव इहेति बोध्यम् ।
मध्ये त्रिभोनाभ्रविलग्नभिन्नमेकं हि दृग्लम्बकसञ्ज्ञमेव ॥ ९६ ॥

स्वबुद्धितो मध्यविलग्नरूपं प्रकल्प्य चार्कोदितभास्वरीत्या ।
कृतं स्फुटं लम्बनकं त्वनार्यभट्टैस्तु तन्नादरणीयमार्यैः ॥ ९७ ॥

चेत्पराशरसंमत्याः कृतं सोऽर्कान्न चाधिकः ।
अत उक्तः कलेरेव योग्यः सोऽनृतभाषणात् ॥ ९८ ॥

सवासनं बहूनां च संमतं तदुपेक्ष्य च ।
युक्त्या सिद्धैकसंमत्या स्वीकुर्वन्त्यधमा इह ॥ ९९ ॥
पराशरो नरः कश्चित्पराशर इवोदितः ।
अनृतं गणितं येन कल्पितं स्वोक्तजातके ॥ १०० ॥
नृकल्पिताः पद्धतयोऽपि तासु
परायुषोऽप्यस्त्यधिकं त्वनायुः ।
नुः क्वाप्यतोऽस्त्रीकमनार्षमार्यै-
स्त्याज्यं तु दुःसाध्यतदाहृतं हि ॥ १०१ ॥
महर्षिभिः स्वीयकृतौ निरुक्ता
लग्नांशतुल्या रविसंख्यका ये ।
भावाः समा एव सदा फलार्थं
ग्राह्यास्त एव ग्रहगोलविद्भिः ॥ १०२ ॥
मुन्युक्तभावात्परतोऽथ पूर्वं तिथ्यंश १५ कैस्तस्य फलं निरुक्तम् ।
लोकेषु मूर्खोदरपोषणार्थं मूर्खैर्विलग्नाद्रविसंख्यका ये ॥ १०३ ॥
भावा निरुक्ताः स्वधिया त्वनार्षाः
सम्यक् फलार्थं नहि तेऽवगम्याः ।
तत्साधनार्थं बहवः प्रकाराः
सत्तत्फलं नैकमपि प्रवक्तुम् ॥ १०४ ॥
तैस्तानथाहं प्रवदामि यस्मा-
त्प्रयोजनं गोलचमत्कृतिर्मे ।
तनोः कुजाधो द्यनिशाख्यमूर्ध्वं
चास्तस्य कार्या अनयोः समानाः ॥ १०५ ॥
षट्षड्विभागा भवतो हि तत्तद्ध्रुवोत्थसूत्रस्तु विकेन्द्रभावाः ।
लग्नोद्भवं रात्रिघटीप्रमाणमेकद्विवेदेषुहतं तु योज्यम् ॥ १०६ ॥



त्र्यग्नांशकानां त्रिषुवांशकेषु
तदुद्भवाः क्षेत्रलवाः पुरोक्त्या ।
साध्याश्च तैर्द्वित्रिशराङ्कसंख्या-
भावाश्च षड्राशियुतास्तथान्ये ॥ १०७ ॥

गजाङ्कैकादशसूर्यसंख्या-
भावाः कृता एव पुरावशिष्टाः ।
यद्वाङ्गखाब्ध्यस्तविलग्नकानि
प्रसाध्य कार्या इह शेषभावाः ॥ १०८ ॥

भमण्डले लग्नचतुर्थमध्ये
तुर्यास्तमध्ये च समा विभागाः ।
कार्यास्त्रयस्तत्र भवन्ति भावा
द्वित्र्यङ्कपञ्चाङ्गकसंख्यकास्ते ॥ १०९ ॥

परम्परान्थोदितपद्धतिस्थप्रामाण्यसिद्धा अबुधैर्निरुक्ताः ।
तत्सप्तमाः षट्सहिताश्च नूनं ये चेरिताः श्रीपतिभट्टपूर्वैः ॥ ११० ॥

समान् विभागान् सममण्डलस्य प्राक्स्वस्तिकाद्द्वादशसंख्ययात्र ।
कृत्वा समाख्यद्वयचिह्नसक्तवृत्तं तु नेयं प्रतिभागमार्यैः ॥ १११ ॥

तान्येव वृत्तानि च यत्रयत्र भमण्डले संमिलितानि तत्र ।
भावा भवेयुर्निजलग्नतस्ते चेत्थं तृतीयोऽयमपि प्रभेदः ॥ ११२ ॥

लग्नापमज्यानिजलम्बभाग-
ज्ययोश्च यद्वर्गवियोगमूलम् ।
स्वदृग्गतिघ्नं निजलम्बभाग-
ज्याप्तं धनुः कोटिगुणोऽस्य हारः ॥ ११३ ॥

लग्नाग्रकाचापजकोटिजीवा स्वदृग्गतिघ्नी त्रिभजीवयाप्ता ।
तच्चापजः कोटिगुणो हरो वा त्रिभज्यकादृग्गतिसंज्ञके ये ॥११४॥

लग्नाग्रया सङ्गुणिते हराप्ते
तच्चापतुल्ये श्रुतिबाहुमाने ।
एकादिपञ्चाङ्क १।२।३।४।५। गुणाः खरामाः
३०। क्षेपांशकाः ३०।६०।८०।१२०।१५०।स्युर्धनभावतोऽत्र ॥११५॥
सौम्ययाम्यविलग्नाग्रावशात्क्षेपभुजांशयोः ।
योगोऽन्तरञ्च दृक्क्षेपे याम्ये सौम्येऽन्यथा ततः ॥ ११६ ॥
तज्ज्यकाञ्च विलग्नाग्रां तथा लग्नाग्रकाञ्चताम् ।
त्रिभज्यां श्रुतिजज्यांग्रां दृग्गतिं परिकल्प्य च ॥ ११७ ॥
श्रुतिबाहुमिती कार्ये पुनरन्ये विचक्षणैः ।
कल्पिताङ्कांशकांशास्तेत्खाङ्केभ्योऽभ्यधिकास्तदा ॥ ११८ ॥
प्रकल्पितश्रुतेरंशा भार्द्धांशेभ्यस्युतास्तथा ।
भार्द्धांशाभ्यधिकत्वे तु भार्द्धांशैस्संयुतास्त ते ॥ ११९ ॥
आद्यबाहुधिके क्षेपे चेत्तदन्तरसम्भवः ।
अन्यकर्णस्तदाद्यान्यकर्णैक्यं चान्यथान्तरम् ॥ १२० ॥
लवाद्यं स्वस्वभावोत्थं लग्ने योज्यं तु ते स्फुटाः ।
धनादयस्त्रिषड्भास्ते मृत्युभावाश्च ते स्मृताः ॥ १२१ ॥
लग्नं षड्भयुतञ्चास्तमथ चान्यभुजज्यका ।
सममण्डलतो बाहुर्भावस्येत्थं प्रसङ्गतः ॥ १२२ ॥
श्रीपत्याद्युक्तभावानां दृग्ज्यकाबाहुमध्यगाम् ।
तदर्गान्तरमूलं तु समवृत्तीयशिञ्जिनीम् ॥ १२३ ॥
असूच्चामपि ताङ्कत्वा तद्वशाद्भावखान्तरम् ।
यच्च तत्तु समस्थेष्टयोग्यभावांशमानतः ॥ १२४ ॥
स्थूलानुपाततस्तोक्ता खलग्नाद्भावसाधनम् ।
सार्वभौमे कृतं तत्तु गोलस्थितिवहिर्गतम् ॥ १२५ ॥

यद्यस्ति भावानयनं तदुक्त्या सूक्ष्मं परं श्रीपतिभावभांशैः ।
तदीष्टभांशैरपि नो तदेव कथं भवेद्धोऽत्र तदुक्तिसाम्यात् ॥ १२६ ॥

खाङ्गं यदा त्रिभलग्नमस्मा-
देकद्विराश्यन्तरितौ त्वदुक्त्या ।
आयव्ययौ नो सममण्डलीयौ
चापोत्थसन्मङ्गुणिताऽनभिज्ञ ॥ १२७ ॥

समकीलकसम्पोतखभावचलवृत्तयोः ।
यतोऽन्तरपं भवृत्तीयं समवृत्तपरान्तरात् ॥ १२८ ॥

स्वेष्टकालजविलग्नवशाद्दृ-
क्क्षेपदृग्गतिमिति तु विदित्वा ।
स्वांशभागखचरावगमात्त्वं
दृग्ज्यकां नरमितिं भुजमानम् ॥ १२९ ॥

दिग्लवीयभुजकोटिजजीवां भोगविम्बभवसङ्गुणिताभ्याम् ।
सत्वरं प्रवद चेन्निपुणोऽसि सद्विवेकमथितार्थनिवन्धे ॥ १३० ॥

लग्नोनितं सत्रिभखेचरेन्द्रं केन्द्रं प्रकल्प्यास्य च कोटिजीवा ।
स्वदृग्गतिघ्नी त्रिगुणेन भक्ता नरो भवेदुक्तवदस्य दृग्ज्या ॥ १३१ ॥

केन्द्रज्यकासङ्गुणिता त्रिभज्या
दृग्ज्योद्धृता तत्फलचापभागाः ।
खाङ्काल्पकास्तेऽङ्कृताग्रकांशै-
र्याम्योत्तरैर्युक्तवियोनितास्च ॥ १३२ ॥

दृक्क्षेपके सौम्यगते तु याम्ये व्यस्तं च ते दिग्लवकोटिभागाः ।
तदूनखाङ्काः स्वदिगंशकाः स्युर्बाहुस्ततः पूर्ववदेव साध्यः ॥१३३॥

त्रिभोनाङ्गाधिके खेटे प्रोक्तमित्थं तथाल्पके ।
व्यस्तमत्राधिके प्रोक्ते ज्ञेयं व्यस्तविशोधनात् ॥ १३४ ॥

वाणो यदा स्यात्खचरस्य तस्य
पूर्वोक्तरीत्यैव हि बिम्बजाते ।
नतोन्नतज्ये सुधियात्र साध्ये
केन्द्रज्यका सेभुजकोटिमौर्व्यौ ॥ १३५ ॥

गुणा नतज्याप्तधनुर्लवा ये
ते संस्कृताः पूर्ववदत्र कार्याः ।
लग्नाग्रकांशैः खलु दिग्लवानां
कोव्यंशकास्तद्वशतो दिगंशाः ॥ १३६ ॥

ततः खबाङ्कस्य ततः कृतोप-
वृत्तस्य विष्कम्भदलं पुरावत् ।
बिम्बोद्भवं चाखिलमित्थमार्यैः
कार्यं बुधानामिह रञ्जनार्थम् ॥ १३७ ॥

आयनं हि वलनं गदितं तद्वासनां वद ममाशु सुबोधाम् ।
खेचरं हि परिकल्प्य खमध्यं तद्गतापमलवान् पलभागान् ॥ १३८ ॥

तत्पुरे कुजगतं हि विलग्नं सन्निभग्रहसमं तु सदैव ।
तत्र लग्नजनिता किल याग्रा सैव चायनभवा वलनज्या ॥ १३९ ॥

आयनाख्यवलनं हि विनैव स्पष्टसंज्ञवलनं प्रवदेद्यः ।
अस्यवित्त्वमवलोक्य विलग्नं कल्पकेषु स महानिति मन्ये ॥ १४० ॥

पूर्वं तु भावानयनप्रसिद्धं
कार्यं लवाद्यं श्रुतिमानमाद्यम् ।
दृक्क्षेपके याम्यदिशि स्थितेऽङ्के
क्रमेण याम्योत्तरगोलयाते ॥ १४१ ॥

श्रुत्यंशकास्तत्र तनौ युतोना दृक्क्षेपके सौम्यगते विलोमात् ।
सन्धिग्रहः स्यात्खलु तत्समे स्यग्रहे भुजो नैव भवेत्खगस्य ॥ १४२ ॥

तथा त्रिमौर्व्या गुणिता हृताद्यश्रुतिज्यया लग्नभवाग्रकैव ।
तत्र स्फुटाख्या वलनज्यका यत्समा समाख्यापमवृत्तयोश्च ॥१४३॥
तत्कालजा स्यात्परमान्तरज्या यथा जिनज्या विषुवापमान्तः ।
समाख्यवृत्तं विषुवाख्यवृत्तं भवृत्तकं तद्धि भवृत्तमेव ॥ १४४ ॥
तयोश्च या स्यात्परमान्तरज्या
जिनज्यका साथ भुजोऽपमज्या ।
विम्बोद्भवो योऽत्र भुजः स च स्या-
त्स्पष्टापमस्योपसुवृत्तजन्तु ॥ १४५ ॥
व्यासार्द्धमान तु भवेत् द्युजीवा तत्रोक्तवद्यायनवालनज्या ।
सैव स्फुटाख्या वलनज्यका स्यात्तत्साधनं चाथ वयं वदामः ॥१४६॥
सन्धिग्रहोनस्वखगस्य कोटिज्यया हृता सा परमान्तरज्या ।
विभाजितोक्तोपसुवृत्तजेन व्यासार्द्धमानेन फलस्य चापम् ॥१४७॥
*स्पष्टं भवेत्तद्वलनं खगस्य
यथायनाख्यं वलनं पुरोक्तम् ।
सन्धिग्रहोनस्वखगायनाख्य-
दिक्संस्थितं तत्सुधिया प्रकल्प्यम् ॥ १४८ ॥

---

* अत्र विशेषः ।
क्रान्तिवृत्तस्थखगतो लग्नसान्धिग्रहादिकम् ।
कार्यमादौ विम्बखेटभुजं गोलविदा ततः ॥
पातोनसान्धिग्रहकोटिजीवा निघ्नी परेषुज्यकया हरघ्नी ।
ततस्त्रिभज्याकृतिभाजितायो परेषुकोटिज्यकया विनिघ्नी ॥
त्रिज्याविभक्ता हरकोटिजीवा तदन्तराच्चापजकोटिराद्यः ।
पातोनसन्धिग्रहशिञ्जिनी सा हराहताद्यज्यकया विभक्ता ॥
सपातमन्दस्फुटखेट ऊनः फलस्य चापेन खगःप्रकल्प्यः ।
तथा जिनज्याघ्नजाशिञ्जिनी सा क्रान्तिज्यका विम्बखगस्य बाहुः ॥
इष्टसंज्ञखगकोटिजज्यका संगुणा च जिनजीवया हृता ।
द्युज्ययेह वलनज्यका भवेत् क्षेपवृत्तसममण्डलान्तरे ॥

विम्बोद्भवेनैव यदोपवृत्तव्याससार्द्धमानेन हृतं तदा तत् ।
विम्बोद्भवं स्यादथ सन्धिखेटग्रहान्तरज्यागुणिता हृता च ॥१४९॥

त्रिभज्यया सा परमान्तरज्या
स्यात्खेटवाङ्कः सममण्डलाख्यात् ।
कार्यं हि दृग्गोलजपृष्ठभागे
सदा मुदा खेलनमित्यमार्यैः ॥ १५० ॥

अथात्र सिद्धान्तशिरोमणिस्थं शीतांशुगोलायनसन्धिचिह्नम् ।
चापोत्थसन्मङ्गणितानभिज्ञैरवास्तवं प्रोक्तमतः सुयुक्त्या ॥१५१॥

विवृत्तनाडीवलयैक्यरूपं
विम्बस्फुटाख्यापमसन्धिदेशम् ।
सूक्ष्मं वद त्वं यदि वोबुधीषि
सिद्धान्ततत्त्वविवेकरूपम् ॥ १५२ ॥

विभिन्नदिक्संस्थितयोर्विवृत्त-
भवृत्तयोर्यौ भवतश्च योगौ ।
मिथश्च षड्भान्तरितौ ग्रहाणां
पातौ खगोलेऽथ हिमांशुगोले ॥ १५३ ॥

यतोऽस्ति राशिक्रमतो भषट्कं
विवृत्तगं सौम्यगतं भवृत्तात् ।
तं राहुमाहुर्हि यतोऽस्ति याम्ये
केतुं तमाहुर्विबुधाः सदैव ॥ १५४ ॥

गतेर्विवृद्ध्या चलति क्रमेषा-
त्पातो विलोमं त्वनुलोममेवम् ।
ह्रासक्रमादाहुरिहैकमेव
स्थानं द्वयोः स्याद्भवृत्तौ विवृत्ते ॥ १५५ ॥

चलांशकव्यस्तसुसंस्कृतेस्य
चक्रं तु चक्रार्द्धमथ क्रमेण ।
आद्यान्यसंज्ञौ किल गोलसन्धी
रवेर्भवेतामयनाख्यसन्धी ॥ १५६ ॥
ताभ्यां त्रिभे व्यस्तचलांशसंस्का-
रतस्त्रिभं चाङ्कगृहं क्रमेण ।
ताभ्यां विधोस्तौ कियदन्तरस्थौ
स्फुटापमार्थं प्रवदाम्यु नूनम् ॥ १५७ ॥
अथायनांशक्रमसंस्कृतस्य
राहोर्भुजज्यापमशिञ्जिनी च ।
तद्द्युज्यकाथ त्रिभजद्यमौर्व्यौ
निघ्नौ भुजज्या विहृता द्युमौर्व्या ॥ १५८ ॥
लब्धस्य चापं विषुवांशकाख्यास्तथायनाख्यं वलनं लवाद्यम् ।
सुसंस्कृतात् राहुत एव तस्य कोट्यंशकास्चन्द्रपरेषुभागैः ॥ १५९ ॥
मृगादिकर्कादिगतोक्तराहौ
हीनान्विता स्यात्परोऽथ तज्ज्या ।
द्युज्यागुणा सा त्रिभजीवयाप्ता
तच्चापकोट्यंशगुणो हरः स्यात् ॥ १६० ॥
त्रिज्यापरज्ये त्वपमज्ययाघ्न्यौ हरोद्धृते तद्धनुषी भवेताम् ।
लवादिकौ कर्णभुजौ भुजांशतद्वैषुवांशान्तरकोटिजीवा ॥ १६१ ॥
त्रिज्यागुणा भाज्य इहाथ कर्ण-
परेषुमौर्व्योर्निहतिस्त्रिमौर्व्या ।
भक्ताप्तचापांशजकोटिमौर्व्या
भाज्यो हृतस्चापमतोऽस्य कोटेः ॥ १६२ ॥

लवादि यन्मेषभषट्कराशौ
सूर्यस्य गोलायनयोश्च सन्धी ।
तेनान्वितौ तौ भवृतौ सुधांशो-
स्तुलादिषट्के रहितौ तु तौ स्तः ॥ १६३ ॥
परेषकर्णज्यकयोर्हतिर्या
जिनज्ययाप्ता फलचापभागाः ।
खाङ्कच्युतास्तज्ज्यकया विनिघ्नी
त्रिज्याथवा भाज्यमितिः पुरोक्ता ॥ १६४ ॥
चन्द्रस्य गोलायनयोश्च सन्धी
आद्यान्यसंज्ञौ भवतोऽर्करीत्या ।
राहौ तु चन्द्रायनसन्धिसंस्थे
कर्णः परः खाङ्कमितः सदा स्यात् ॥ १६५ ॥
विवृत्तनाडीवलयैक्यसक्तं
कदम्बवृत्तं भवृतौ तु यत्र ।
अजादितो गोलजसन्धिरस्मात्
त्रिभे यथोक्तायनसन्धिरुक्तः ॥ १६६ ॥
भवृत्ततद्गोगजसन्धितस्तौ विम्बोद्भवौ तौ भवतो यतस्ता ।
विम्बस्फुटक्रान्तिलवाद्यभावात्परत्वतो विद्यमण्डलान्तः ॥१६७॥
भौमादिकानां स्फुटपातहीन-
चक्रं तु राहुं परिकल्प्य तस्मात् ।
स्फुटात्परेषोर्विहितौ यथोक्त्या
तौ स्तः स्फुटौ तद्वलयैक्यभेदात् ॥ १६८ ॥
कर्णज्ययाप्ता त्रिगुणेन निघ्नी क्रान्तिज्यका स्यादयनाख्यसन्धौ ।
स्फुटापमज्या परमेन्दुभोगायनाख्यसन्धीषुगविम्बजाता ॥१६९॥

तद्गोलसन्धीन्दुजभोगतस्त-
द्बिम्बीयवाणायनवाक्त्वनैक्यम् ।
तथान्तरे यन्मृगकर्किसंस्थे
चलाख्यराहौ किल तज्ज्यका सा ॥ १७० ॥

यो गोलसन्धिर्निकटोऽस्ति राहोरुक्तं त्विदं तद्वशतोऽथ विज्ञैः ।
ज्ञात्वा विवृत्ते ऽयनसंस्कृतेन्दुराहूक्तकर्णानयुतोक्तराहुः ॥ १७१ ॥

आद्यान्त्यपादेऽथ पदे द्वितीये खाङ्काऽधिकाल्पे नु परे तृतीये ।
खाङ्काल्पकोर्ध्वे तु परे क्रमेणोभयत्र कर्णानयुतोक्तराहुः ॥१७२॥

स्यादिन्दुविम्बीयसुगोलसन्धिः
केन्द्रं तदूनो हि विवृत्तचन्द्रः ।
राहौ तु कर्क्यादिमृगादिचिह्ने
आद्यान्त्यपादक्रमतोऽस्ति केन्द्रम् ॥ १७३ ॥

तज्ज्यागुणा राक्रपमज्यकाप्ता
कर्णज्यया चापमतो विधोः स्यात् ।
स्फुटापमो मेषतुलादिकेन्द्रेऽ-
सौ सौम्ययाम्यो मकरादिषड्भे ॥ १७४ ॥

यद्युक्तराहौ विपरीतदिक् स्या-
दुक्तात्तु कर्क्यादिभषट्कसंस्थे ।
आर्षोक्त्यभावात्स्फुटपातसिद्धौ
सूक्ष्मोऽप्यकिञ्चित्कर एव बोध्यम् ॥ १७५ ॥

इत्थं च गोलायनसन्धिरूपं चापोत्थसद्वासनया मयोक्तम् ।
स्थूलानुपातैः करणप्रवीणाः प्रतारिताः प्राग्गणितप्रवीणैः ॥१७६॥

त्र्ययं खचन्द्राः खभुवोऽग्नयः खं
कृतायनांशो गृहपूर्वराहुः ।

विधोः सदाद्यायनसन्धिसंस्थो-
ऽसौ भास्करोक्त्या नहि सिध्यतीह ॥ १७७ ॥
तद्रीत्याऽयं प्रोक्तराहौ विधोः प्राक्
किञ्चिन्न्यूना द्वित्रिचन्द्रा २ । ३ । १ यतोंऽशाः ।
सन्धिर्गोलोक्त्याऽयनाख्यो न सिद्धः
पातोऽप्युक्तस्तत्कृतोऽतो न युक्तः ॥ १७८ ॥
यः कश्चिदज्ञातगुणोऽस्ति येन भाज्यो हतः क्षेपयुतोनितश्च ।
हरोद्धृतः शुद्धिमुपैति तत्र गुणाप्तिविज्ञानमथ प्रवच्मि ॥ १७९ ॥
भाज्ये हराप्ते यदिहास्ति शेषं
हारं प्रकल्प्याथ हरस्तु भाज्यः ।
शेषं पुनः साध्यमिहापि तच्च
हारं हरो भाज्य इति क्रमेण ॥ १८० ॥
अन्त्यावशेषं भजनान्मिथो य-
द्भवेद्दृढाङ्कस्त्वपवर्त्तनाङ्कः ।
तेनोद्धृतौ भाज्यहराविहाद्यौ
दृढौ भवेतां च तथा विभक्तः ॥ १८१ ॥
क्षेपोऽपि नूनं दृढसञ्ज्ञकः स्याद्येनापवर्त्त्याविह भाज्यहारौ ।
क्षेपस्य तत्राप्यपवर्त्तनं न खिलं तदुद्दिष्टमिति प्रकल्प्यम् ॥ १८२ ॥
अतोऽन्यथा चाखिलमेव यानि
पूर्वं मिथः संभजनागतानि ।
फलान्यधोऽधस्तु दृढस्ततोऽधः
क्षेपस्तथान्त्ये खमुपान्तिमेन ॥ १८३ ॥
स्वोर्ध्वे हतेऽन्त्येन युते तदन्त्यं त्यजेन्मुहुः स्यादिति राशियुग्मम् ।
ऊर्ध्वो विभाज्येन दृढेन तष्टः फलं गुणः स्यादपरो हरेण ॥ १८४ ॥

एवं तदैवात्र यदा समास्ताः
स्युर्लब्धयस्तेद्विषमास्तदानीम् ।
यथागतौ लब्धिगुणौ विशोध्यौ
स्वतक्षणाच्छेषमितौ तु तौ स्तः ॥ १८५ ॥

ये योगजे तक्षणतो विशुद्धे वियोगजे ते भवतो गुणाप्ती ।
एवं स्थिरे कुट्टविधौ विशुद्धिं क्षेपं च रूपं परिकल्प्य साध्ये ॥१८६॥

यथोक्तरीत्या गुणकारलब्धो स्वक्षेपकक्षीयविशुद्धिनिघ्ने ।
तष्टे च ते वै निजतक्षणाभ्यां स्यातां तयोस्ते गुणकारलब्धी ॥१८७॥

चले स्थिरे कुट्टविधौ तु बोध्यं संतक्षणे तुल्यफलं सदेह ।
इष्टाहतस्वस्वकतक्षणाढ्यौ स्यातां च तौ लब्धिगुणावनन्तौ ॥१८८॥

हरतष्टे धनक्षेपे गुणलब्धी तु पूर्ववत् ।
क्षेपतक्षणलाभाढ्या लब्धिः शुद्धौ तु वर्जिता ॥ १८९ ॥

क्षीयभाज्यहरक्षेपयोग्यै। लब्धिगुणौ तु यौ ।
तावेव भवतस्तेषामिष्टघ्नानामपि ध्रुवम् ॥ १९० ॥

इति कुट्टकविधिः ॥

युगादिजैः चक्रकुवासराख्यैः तावद्यथोक्त्या सुदृढैः प्रसाध्य ।
राश्यंशलिप्ताविकलात्मखेटज्ञानाद्दिनौघाद्यवगन्तुमत्र ॥१९१॥

समानयेद्यो भगणावशेषं विलिप्तिकाशेषमिह स्वबुद्ध्या ।
मन्यामहे तं गणितज्ञचक्रग्रहर्क्षचक्राकलने ध्रुवेन्द्रम् ॥ १९२ ॥

राश्यंशलिप्ताविकलात्मकस्य
ग्रहस्य कार्याः प्रथमं विलिप्ताः ।
ताभिर्हतास्वक्रविलिप्तिकाप्ता
दृढकहा व्यग्रफलं ततो यत् ॥ १९३ ॥

तत्रैकमाद्योऽन्य इहावशेषविहीनितास्वक्रविलिप्तिकाः स्यात् ।

शून्येऽवशेषे विकलावशेषं शून्यं भवेत्तद्भगणावशेषम् ॥ १९४ ॥
शेषेण तद्व्यशफलेन तुल्यं विलिप्तिकाशेषकसम्भवे तु ।
विलिप्तिकारूपखगाववोधे सुबोधमग्रद्वयमेवमत्र ॥ १९५ ॥
द्दढकद्दास्वकविलिप्तिकातो-
यदाल्पकास्तत्र द्दढकद्दाल्पः ॥
अन्योऽपि चेत्तेन समं विलिप्ता-
ग्रं चाद्यतुल्यं भगणावशेषम् ॥ १९६ ॥
द्दढकद्देभ्योऽन्य इहाधिकश्चे-
ज्ज्ञेयं तदुक्तं खिलमेव सर्वम् ।
द्दढकद्दास्वकविलिप्तिकातो-
यदाधिकास्तत्र च शेषयोश्च ॥ १९७ ॥
बहुप्रकारं किल संभवः स्याद्याभ्यां स एवास्ति खगः पुरोक्तः ।
अन्येन तुल्ये विकलावशेषे स्यादाद्यतुल्यं भगणावशेषम् ॥१९८॥
द्दढकद्दास्वकविलिप्तिकाप्ता
लब्धाङ्कशेषाङ्कमिती च साध्ये ।
लब्धाङ्कसंख्यानधिकेष्टनिघ्न्यो-
विलिप्तिकास्वकभवा निजान्ये ॥ १९९ ॥
युक्ता द्दढाख्यकद्दतोऽल्पकत्वे तदङ्कतुल्ये विकलाग्रके स्यात् ।
चक्राग्रमिष्टाद्ययुतिः कथंचिल्लब्धाङ्कतो नाधिकमिष्टमत्र ॥२००॥
सार्वभौमकृता सर्वाधिकमेवाहृतं किल ।
तच्छेषद्वितयं चात्र तदन्यानवबोधतः ॥ २०१ ॥
लिप्ताद्यं द्युयुग्भवन्ति विकलास्तासां वियोगस्त्वियुक्
भागा भागदलं गृहाणि शशिनः खत्रीन्दव १३० स्तद्युतिः ।
इत्थं खीयशिरोमणौ भ्रमवशाद्यच्चाखिलं चेरितं

तत्त्वैवं खिलमेव तद्गणनया संदृश्यते कोविद ॥ २०२ ॥

यथा राश्यादेर्विकलाः १२७०७१८ तद्रीत्या दृढकुदिन ८५६३१३ गुणा १२१५२०५०८८०४७ स्वक्षविकला १२८६००० भक्ताः फलं ८३७६५८ शेषं ३३१०४७ भगणशेषं ८३७६५८ विकलावशेषं ८६४८५२ एतदृढकहाधिकं इति खिलमुदाहरणं भगणावशेषा-द्वास्तवखगस्त्वयं ११ । २२ । ५८ । ४० विकलावशेषं ८६४० ।

चक्रोत्थविकलामानं भाज्यं हारं दृढकहान् ।
विकलाशेषमानं तु विशुद्धिं परिकल्पयेत् ॥ २०३ ॥
गुणलब्धी ययोक्त्या ये तयोस्तु गुणको भवेत् ।
चक्राग्रं खेटविकलाः स्युर्लब्धिर्द्युगणोऽप्यतः ॥ २०४ ॥
दृढचक्रं येन गुणं चक्राग्रोनं हृतं च तत् ।
दृढकहैः शुद्धिमेति स गुणो द्युगणो भवेत् ॥ २०५ ॥
उक्तकुट्टकरीत्यातः कार्यो बुद्धिमता गुणः ।
दृढकहाङ्कसंयोगान्मुहुः स्यादनेकधा च सः ॥ २०६ ॥
उक्ता प्रश्नोत्तराण्येवं कुट्टकोक्तप्रकारतः ।
अधुना तान्प्रवक्ष्यामि वर्गप्रकृतिरीतितः ॥ २०७ ॥
तत्र वर्गप्रकृत्युक्तप्रकारान्प्रथमं शृणु ।
कृतिर्गुणगुणा क्षेपयुतोना मूलदा भवेत् ॥ २०८ ॥
गुणो यो राशिवर्गस्य सैव प्रकृतिरुच्यते ।
राशिः कनिष्ठसंज्ञं स्यात्पदं तस्य कृतिर्गुणा ॥ २०९ ॥
प्रकृत्या क्षेपयुक्तोना ज्येष्ठं तस्य पदं भवेत् ।
कनिष्ठज्येष्ठतत्क्षेपान् पङ्क्त्यां स्थाप्य ततस्त्वधः ॥ २१० ॥
तुल्यानतुल्यान् संस्थाप्य तुल्यातुल्याख्यभावना ।
कार्या योगान्तराभ्यां वै तानि स्युर्वह्नधा ततः ॥ २११ ॥

मिथो ज्येष्ठपदाभ्यस्तकनिष्ठपदयोर्युतिः ।
अन्तरं वा कनिष्ठं स्यादेवं ज्येष्ठपदं भवेत् ॥ २१२ ॥
प्रकृतिघ्नकनिष्ठाख्यहतिर्ज्येष्ठहतिश्च या ।
तयोर्योगान्तरे ज्येष्ठपदे च भवतः क्रमात् ॥ २१३ ॥
क्षेपयोराहतिः क्षेपो भवेत्तद्भावनाद्वये ।
योगान्तरवशादित्थं समासान्तरभावना ॥ २१४ ॥
इष्टवर्गहतः क्षेपः क्षेपः स्यादिष्टभाजिते ।
मूले ते स्तोऽथवा क्षेपः क्षुण्णः क्षुण्णे तदा पदे ॥ २१५ ॥
इष्टवर्गप्रकृत्योर्यद्विवरं तेन वा भजेत् ।
द्विघ्नमिष्टं कनिष्ठं तत्पदं स्यादेकसंयुतौ ॥ २१६ ॥
ततो ज्येष्ठमिहानन्त्यं भावनातस्तथेष्टतः ।
रूपशुद्धौ खिलोद्दिष्टं वर्गयोगो गुणो न चेत् ॥ २१७ ॥
अखिले कृतिमूलाभ्यां द्विधा रूपं विभाजितम् ।
द्विधा ह्रस्वपदं ज्येष्ठं ततो रूपविशोधने ॥ २१८ ॥
यत्राधिशेषस्य कृतिस्तु दिगघ्नी सैका कृतिः सौरदिनप्रमाणम् ।
तत्राधिमासप्रमितिं वदाशु जानासि चेत्तत्त्वविवेकमार्गम् ॥२१९॥
युगार्कवाराधिकमासहारभाज्योद्भवं यत्त्वधिमासशेषम् ।
तच्च द्विधा स्यादृढं दृढं च प्रश्नद्वयं चेत्थमिहोपपन्नम् ॥२२०॥
वर्गप्रकृत्या बहुधा कनिष्ठान्यादौ प्रसाध्यानि यथोदितानि ।
तेष्वत्र यत्स्याद्युगसौरवारेभ्योऽल्पं तथा चादृढमाद्यमत्र ॥२२१॥
प्रश्ने विशुद्धिं किल तां प्रकल्प्य दृढाख्यतद्भाज्यहराङ्ककाभ्याम् ।
स्वकुट्टकोत्तयैव कृते गुणाप्ती ते सौरवाराधिकमासमाने ॥२२२॥
प्रश्ने द्वितीये दृढयोगसौर-
दिनाल्पकं यच्च दृढं तदेव ।

प्रकल्प्य शुद्धिं दृढभाज्यहारा-
भ्यां ये गुणाप्ती विहिते तु ते स्तः ॥ २२३ ॥
निरग्रलब्धौ दृढभाज्यहारा-
भ्यां कल्पिता सा दृढतद्विशुद्धिः ।
तेनात्र सर्वानपवर्त्तनेन
क्षेपे न दोषोऽनपवर्त्तनस्य ॥ २२४ ॥
यत्र क्वचिद्दृढहराद्प्यल्पमदृढं पदम् ।
अन्यप्रश्ने तु तज्ज्ञेयं दृढं लब्धिगुणाप्तये ॥ २२५ ॥
आद्यान्ययोः क्रमादेवं तदेकं त्वदृढं दृढम् ।
कालभेदे त्वभेदे नो तुल्ये शेषे तयोर्यतः ॥ २२६ ॥
आद्यादृढं यदान्यस्मिन् दृढमेवादृतं तदा ।
नाद्ये तददृढं किं तु स्वापवर्त्तगुणं हि तत् ॥ २२७ ॥
कुत्रापि वर्गप्रकृतेः प्रश्नौ नात्रैककालिकौ ।
केवले कुट्टकेऽप्येवं वैषम्यं गणितेऽस्ति हि ॥ २२८ ॥
दृढवत्त्वदृढक्षेपाद्यथोक्त्या यः कृतो गुणः ।
सोऽसन् दृढादृढस्वस्वक्षेपोदाहरणद्वये ॥ २२९ ॥
अदृढे स्वापवर्त्ताप्ततत्क्षेपात्केवलाद्दृढे ।
स्वीयोदाहरणे भिन्नक्षेपाद्युक्तो गुणोऽस्त्ययम् ॥ २३० ॥
यत्र स्वभिन्नैव विशुद्धिरज्ञैः स्वभाज्यहारोत्थनिरग्रलब्धौ ।
उक्ता तदुद्दिष्टमतीव दुष्टमुक्तं सदा कुट्टकतत्त्वविज्ञैः ॥ २३१ ॥
स्वोचितक्षेपसम्बन्धिभाज्यभाजकयोरिह ।
दृढत्वे तु दृढः क्षेपस्त्वदृढस्त्वदृढत्वतः ॥ २३२ ॥
निश्चयस्तद्विदामित्थं चास्ति चेदन्यथा तदा ।
तद्धि व्यासोदितं चापि दुष्टं ज्ञेयं विजानता ॥ २३३ ॥

स्वतश्च्युतेऽपवर्गादनेके
सौराब्दमानाधिकमासमाने ।
परत्वमानाधिकता तयोर्या
नैवात्र दोषस्तु यतस्त्वभीष्टाः ॥ २३४ ॥
सौरास्तु यत्कालभवाश्च तज्जाः
कृताधिमासा अपि तेऽवगम्याः ।
नादिर्न चान्तः किल यस्य तस्या-
यं कालजः स्यान्नियमो वृथैव ॥ २३५ ॥
अजस्रमिन्द्वर्कपरिभ्रमोऽयं
निवार्यते केन स नैव बुद्धः ।
यद्ब्रह्मणा तज्जननं त्विदं य-
त्तदर्थवादात्मकमेव सर्वम् ॥ २३६ ॥
उक्तान्यशुद्धिं परिकल्प्य यः स्या-
त्समुद्यतः कुट्टकसञ्ज्ञकार्थम् ।
खिन्नस्त्वतस्तद्व्यभिचारतस्त्व
क्वचित्स च क्लिश्यति मूढबुद्धिः ॥ २३७ ॥
एवं च यत्राधिकमासशेषं वर्गीकृतं व्येकमिदं दशाप्तम् ।
वर्गो भवेत्तत्त्वधिमासशेषं वदेदिति प्रश्नसदुत्तरं तु ॥ २३८ ॥
यावत्तावत्कल्प्यमत्राधिशेषं कार्या शेषप्रक्रियानेकवर्णात् ।
तुल्यौ पक्षौ सन्विधायाद्यपक्षमूलं यावत्तावदेकं परस्य ॥ २३९ ॥
दशघ्नवर्गीकृतकालकस्य
सरूपकस्याथ कृतिप्रकृत्या ।
मूले प्रसाध्ये विहितं यदस्ति
ज्येष्ठं कनिष्ठं परिकल्प्य शुद्धिः ॥ २४० ॥

प्रश्नद्वयोक्ताङ्गणितप्रकारा-
द्द्विधापि साध्या गणकैः स्वबुद्ध्यै ।
यथोचितं सौरदिनप्रमाणं
तथाधिमासप्रमितिस्ततः स्यात् ॥ २४१ ॥

उक्तं शिरोमणौ चैवमुद्दिष्टमधिशेषकम् ।
यदर्थभ्रमिता भ्रान्ता अद्याप्यज्ञा भ्रमन्ति हि ॥ २४२ ॥

उद्दिष्टं कुट्टके तज्ज्ञैर्ज्ञेयं निरपवर्त्तनम् ।
व्यभिचारः क्वचित्क्वापि खिलत्वापत्तिरन्यथा । इति ॥ २४३ ।

वर्गप्रकृतिसिद्धेषु पदाङ्केष्वदृढोऽस्ति यः ।
आद्यप्रश्नोचितः सोऽङ्कः प्रोक्त उद्दिष्टसंज्ञकः ॥ २४४ ॥

दृढो यस्त्वास्ति सोऽङ्कः स्यादन्यप्रश्नोचितस्तथा ।
ज्ञेयं तदेव सुधियोद्दिष्टं निरपवर्त्तनम् ॥ २४५ ॥

आद्यभाज्यहरौ तौ यौ दृढाङ्कानपवर्त्तितौ ।
अन्यभाज्यहरौ तौ स्तो यौ दृढाङ्कापवर्त्तितौ ॥ २४६ ॥

अपवर्त्तानपवर्त्तक्रमात्कुट्टकरीतितः ।
ताभ्यां लब्धिगुणौ स्यातामधिमासार्कवासरौ ॥ २४७ ॥

दृढो दृढीकृतो वाद्यप्रश्ने यदि पदाङ्ककः ।
गृह्यते स्वोचितोद्दिष्टलब्ध्यै तच्च क्रमात्तदा ॥ २४८ ॥

खिलत्वं कुट्टकानुक्त्या व्यभिचारोऽन्यशेषतः ।
अन्यप्रश्ने तदुद्दिष्टमदृढं वा दृढीकृतम् ॥ २४९ ॥

तत्राप्येवं यथोक्त्यैव खिलत्वं व्यभिचारता ।
प्रश्नद्वयोक्तरीत्यैवमुद्दिष्टं स्वहरात्पकम् ॥ २५० ॥

प्रकल्प्य भास्करीयं तु व्याख्येयं दोषवर्जितम् ।
अचोदितसदुक्त्यैव निरस्तप्रायमीरितम् ॥ २५१ ॥

यन्मरीचौ हि तदसत्तुच्छं ज्ञेयं विजानता ।
असङ्गतालापभयादिह तन्नादृतं मया ॥ २५२ ॥

दृढीकृतेऽप्यत्र हरे च भाज्ये-
ऽपवर्त्तयोग्येऽनपवर्त्तिता च ।
शुद्धिं गृहीत्वैव वदन्ति तन्त्रे
मूढाः पुरोदाहरणस्य सिद्धिम् ॥ २५३ ॥

यथाङ्कोऽत्र कोऽष्टाहतो दिग्वियुक्तो-
रसाप्तस्तु तत्राखिलेन्द्वीन्दुतुल्ये ।
खिले वेदनेत्रे गुणाप्तीत्यमत्र
सतां चासतां कुट्टकस्य प्रकारः ॥ २५४ ॥

नवाङ्कुरेऽपि बीजोत्थे कुट्टकानपवर्त्तने ।
सिद्धान्तसंमतिर्योक्ता सदर्थाज्ञानतोऽस्ति सा ॥ २५५ ॥

वर्गप्रकृत्या विषयो यथा स्यात्तथा स्वबुद्ध्या बहुधा स्वबीजे ।
यद्भास्करार्यैर्गदितं प्रसङ्गादहमिह स्वबुद्ध्यैव हि तद्विशेषम् ॥२५६॥

सप्ताष्टनिघ्न्योरिह राशिकृत्योर्युतिः कृतिः स्यात्प्रवदाशु तत्र ।
तयोः प्रमाणं हृदि चेन्नितान्तं जागर्ति वर्गप्रकृतिस्तवेह ॥२५७॥

यावत्तावत्कालकौ तौ च राशी
कृत्वा सप्ताष्टाहते तत्कृती च ।
कार्ये सुज्ञैराद्यपङ्क्त्यां तथान्य-
पङ्क्त्यां वर्गं नीलकस्य प्रकल्प्य ॥ २५८ ॥

तुल्यौ पक्षौ तुल्यशुद्ध्यात्र कार्यौ
क्षिप्त्वाष्टघ्नं कालकस्यैव वर्गम् ।
पक्षस्यैकस्यात्र मूलं तु नीला-
ख्यैकोऽन्यस्य स्याच्च वर्गप्रकृत्या ॥ २५९ ॥

यावद्वर्णस्य वर्गाङ्कः प्रकृतिः कालकस्य च ।
वर्गाङ्कक्षेपकस्तत्र ह्रस्वज्येष्ठे यथोदिते ॥ २६० ॥
कार्ये ह्रस्वं भवेद्यावत्तावन्मानं तथा भवेत् ।
ज्येष्ठाख्यं नीलकस्यात्र कालकस्येष्टमानतः ॥ २६१ ॥
व्यक्तं द्विराशिमानं स्यादिति बीजक्रियोदिता ।
इत्थं यत्रैकपक्षस्थौ वर्णवर्गौ च केवलौ ॥ २६२ ॥
तत्रोदितं यदा वर्णवर्गौ द्वौ रूपकाणि च ।
तत्र सूक्ष्ममलं मित्र वेत्सि बीजक्रियां यदि ॥ २६३ ॥
प्रकृतिः प्रथमाद्यवर्णवर्गस्थितसङ्ख्या परवर्णवर्गसङ्ख्या ।
इह रूपयुता भवेच्च तत्क्षेपक एवं बहुधा पदे प्रसाध्ये ॥ २६४ ॥
रूपैर्युक्तस्योनितो वान्यवर्णो-
ह्रस्वं तद्वत् ज्येष्ठमानं च कृत्वा ।
कार्या शेषप्रक्रिया बुद्धिमद्भि-
र्यद्वत्प्रोक्ता भास्कराद्यैः स्वबीजे ॥ २६५ ॥
केचित्तु यैर्वर्णकृती सरूपे यत्राद्यपक्षे गदिते पदार्थम् ।
न तत्पदं चापि कथं चिदत्र सद्युक्तितस्तच्छृणु तन्मतज्ञ ॥२६६॥
प्रकृतिस्त्वेकवर्णस्य वर्गाङ्कोऽथावशेषकम् ।
अन्यवर्णकृती रूपान्विता क्षेपो द्विखण्डजः ॥ २६७ ॥
ह्रस्वं सरूपः परवर्ण एव
चेत्कल्प्यते तस्य कृतौ त्ववश्यम् ।
खण्डत्रयं तच्छकलद्वयस्य
चाद्यान्ययोः खण्डकयोश्च वर्गौ ॥ २६८ ॥
तत्खण्डयोर्द्विघ्नहतिस्तु मध्ये
इत्थं कनिष्ठस्य कृतेः स्वरूपम् ।

सा च प्रकृत्या गुणिता स्वखण्ड-
द्वयात्मकक्षेपयुता त्वकश्यम् ॥ २६९ ॥
ज्येष्ठस्य वर्गोऽस्य पदं वदन्ति ज्येष्ठं कथं तद्भवतीह युक्त्या ।
आद्यान्त्ययोस्तच्छकलद्वयाख्यकनिष्ठजज्येष्ठकयोस्तु वर्गौ ॥२७०॥
तत्क्षेपखण्डात्मककल्पितस्व-
क्षेपोद्भवौ मध्यमखण्डके तु ।
आद्यान्त्यतत्खण्डकनिष्ठघातो-
द्विघ्नः प्रकृत्या गुणितोऽस्ति नायम् ॥ २७१ ॥
तज्ज्येष्ठयोर्द्विघ्नहतिस्वरूपो येनास्य मूलं सुधिया प्रकल्प्यम् ।
तन्मध्यमस्याहरणप्रसिद्धवीजोक्तमहास्तवयुक्तितोऽत्र ॥ २७२ ॥
असम्भवात्तत्पदयोग्यतायाः
सरूपके वर्णकृतीति पाठः ।
अन्यैरनुक्तोऽपि बलात्कृतीनः
श्रीभास्करार्यैर्न हि सम्यगस्ति ॥ २७३ ॥
सिद्धान्तसुन्दरकृताप्यत एव वीजे
स्वीये त्वरूपकसुवर्णकृतीति पाठम् ।
कृत्वा सरूपकशिरोमणिपाठमाद्यं
मुक्तोदितं निजधियैव सदित्यमाङ्गः ॥ २७४ ॥
भास्करोक्तेश्च तद्दोषं परिहर्तुं समुद्यतः ।
स्वोक्तकण्टकपङ्क्त्यां च प्राह कश्चित्तदुच्यते ॥ २७५ ॥

सरूपवर्णवर्गक्षेपे तु प्रोक्तयुक्त्या मूलासिद्धावपि वर्गगतप्रकृतौ क्षेपस्वरूपपदलाभे सति प्रकृतिरूपयोर्मूलघातेन द्विघ्नेन क्षेपवर्णवर्गाङ्को भक्तस्तद्गुणः क्षेपवर्णवर्गः कनिष्ठं तस्मादुक्तरीत्या ज्येष्ठमलसिद्धिरिति वर्णवर्गस्यापि वर्णत्वात्तदङ्को गुणकोऽ-

भिमत एव। अत एव पूर्वफक्किकायामपि शेषविधिना अव्यक्तव-
र्गवर्गस्याप्यव्यक्तवर्गत्वाद्व्यक्तवर्गस्याव्यक्तत्वाच्च रूपाणामनि-
वारितत्वाच्च पदलाभोक्तिरुपपन्ना । एवं समाधानफक्किकाया-
मपि क्षेपसजातीयवर्ण इति वर्णवर्गत्वेऽप्युपपन्नम्। रूपपदालाभे
तु यस्याङ्कस्य वर्गः क्षेपखण्डकरूपयुतो मूलदः स्यात्सोऽङ्कः प्र-
कृतिमूलभक्तः फलतुल्यरूपाणि कनिष्ठखण्डं व्यक्तं मूलदमूलं
प्रकृतिमूलगुणितं येन कुट्टकसंज्ञेन गुणकेन गुणितं क्षेपवर्णव-
र्गाङ्कार्द्धहीनं प्रकृतिकनिष्ठव्यक्तखण्डघातेन भक्तं फलेन कुट्टक-
संज्ञगुणतुल्येन गुणितः क्षेपवर्णवर्गः कनिष्ठाव्यक्तखण्डम् । एवं
खण्डद्वयात्मकं कनिष्ठमस्मादुक्तरीत्या ज्येष्ठमूलसिद्धिः । यथा
प्रकृतिः याव४ क्षेपकः काव४८ रू२० अत्र कनिष्ठखण्डं व्यक्तं २
परखण्डज्ञानार्थं कुट्टकन्यासः भा १२ क्षे २४ ह ८ अत्र गुणाप्ती तुल्ये
६ । ६ एतद्गुणगुणितः कालकवर्गः काव६ कनिष्ठाव्यक्तखण्डं
एवं कनिष्ठं काव६ रू २ अतो ज्येष्ठं काव १२ रू ६ अतः पूर्वं
वर्णाङ्को वर्णवर्गपरतया व्याख्यातो रूपाङ्कस्योक्तरीत्या कल्प-
नीय इति सम्यगेव । एवं धीमद्भिरवर्गप्रकृतावुदाहरणं खिलं
विज्ञेयमिति ॥

इत्थं सरूपकौ वर्णवर्गौ तत्पदसंश्रये।
दूषणं भूषणं दत्तं तच्च ब्रूमोऽधुना वयम् ॥ २७६ ॥
अव्यक्तकल्पनामूढौ द्वावप्यतिजडाविह ।
ययोर्भास्करबीजार्थावगमो नहि तत्त्वतः ॥ २७७ ॥
यत्र वर्णकृती च रूपकाणीति तत्र पदयोः परिमाणम् ।
स्याद्यथा किल तथैव वदामि भास्करेष्टसदुदाहरणं हि ॥२७८॥
यथाभीष्टराश्योस्त्र वर्गौ प्ररा५ष्ट्या १६

हृतौ तद्युतिः खाश्वि २० हीना कृतिः स्यात् ।
शर ५ घ्नैकवर्गो नख २० घ्नान्यवर्गो-
ज्झितो भूप १६ युक्तोऽपि वर्गोऽथ वा स्यात् ॥ २७९ ॥
तयोस्ते पदे तौ च राशी प्रचक्ष्व
पटुत्वेऽभिमानोऽत्र यद्यस्ति बीजे ।
द्वितीयं च यावन्मितं कालकं चा-
परं कल्पयित्वा सुबोधा क्रिया स्यात् ॥ २८० ॥
सरूपके वर्णकृतीति पाठे नैवाल्पकस्यात्र निषेध उक्तः ।
तेनाल्पकैतादृशमेव नूनं श्रीभास्करस्याभिमतं न चान्यत् ॥२८१॥
यद्यप्यत्र खतो वर्गो ऋणो नैव तथापि तत् ।
संशोधनाद्धि वर्गस्य धनर्णक्रियया भवेत् ॥ २८२ ॥
अत्र मूलार्थमुदाहरणद्वयस्थौ पक्षौ ।

याव ५ काव १६ रू २०
याव ५ काव २० रू १६

अत्र कृत्वोभयत्रापि प्रकृतिं पञ्चसंमिताम् ।
शेषं च क्षेपकं स्वेष्टसरूपोक्तिक्रिया कृता ॥ २८३ ॥
अत्र प्रकृतिः ५ क्षेपः काव १६ रू २० अथ वा प्रकृतिः ५ क्षेपः काव २० रू १६ ॥
भास्कराभिमते स्यातां कनिष्ठज्येष्ठके यथा ।
तथात्रानयनं वच्मि गणकानन्दहेतवे ॥ २८४ ॥
तावत्क्षेपं क्षेपरूपाणि कृत्वा ह्रस्वज्येष्ठे साधनीये यथोक्ते ।
पूर्वक्षेपे योऽन्यवर्णस्य वर्गस्तस्याङ्कघ्नो ज्येष्ठवर्गो विभक्तः ॥२८५॥
रूपैर्निघ्न्या तत्प्रकृत्याप्तमूलं तद्घ्नः पूर्वक्षेपजो वर्ण एवम् ।
ज्ञेयं ह्रस्वाव्यक्तखण्डं पुरोक्तह्रस्वं तु स्याद्व्यक्तखण्डं तदैक्ये ॥२८६॥
सरूपकक्षेपकजातिवर्णे एवं स्वकीयं तु कनिष्ठमत्र ।

सिद्धं भवेज्ज्येष्ठमतोऽविकल्पं प्रसाधयेत्तत्पदसिद्धिरित्थम् ॥२८७॥
परं तु मूलसिद्ध्यर्थमृणगाप्ताङ्कतः किल ।
धनत्वमेव कृत्वात्र मूलं ग्राह्यं विचक्षणैः ॥ २८८ ॥

अथ वैककनिष्ठखण्डमस्वं प्रकल्प्यैकज्येष्ठखण्डमस्वं स्यात् । प्रथमोदाहरणे राशी ५ । १ वा ७ । २ वा ८ । ३ द्वितीयोदाहरणे राशी ५ । १ वा ८ । २ वा ११ । ३ एवमनेककनिष्ठज्येष्ठकल्पनयापि बहुधा तत्सिद्धिः । यथेह पक्षयोः कनिष्ठज्येष्ठे·

क·का२रू३ ज्ये·का६रू५
क·का३रू२ ज्ये·का५रू६

धनर्णक्षेपकखण्डकाभ्यां सरूपकोदाहरणस्य सिद्धौ ।
तयोः स्वयोः क्षेपवशात्खिलत्वं सर्वत्र चाज्ञैः कथमादृतं तैः ॥ २८९॥

सरूपवर्णद्वयवर्गपक्षे
त्ववर्गकैकप्रकृतौ खिलत्वम् ।
असम्भवाज्ज्येष्ठपदस्य चाज्ञा-
इत्थं वदन्तो नितरां निरस्ताः ॥ २९० ॥

रूपान्वितौ वर्णजवर्गजाङ्काववर्गवर्गौ च तयोस्तु वर्गम् ।
पदोपपत्त्यै प्रकृतिं प्रकल्प्य तं चाखिलं पक्षमिह ब्रुवन्ति ॥२९१॥
अवर्गजां तां प्रकृतिं प्रकल्प्य खिलं च तं पक्षमुदाहरन्ति ।
अमूलदो मूलद एक एव पक्षो न दृष्टः कुहचिद्विरुद्धः ॥ २९२ ॥

अतः खलैर्भूषणदानमुक्तं
यत्तात्सता दूषणमेव वेद्यम् ।
भावेऽप्यभावस्य तदाहतोऽयं
पदस्य तज्ज्ञैर्बहुधात्र चिन्त्यः ॥ २९३ ॥

यत्र क्षेपोद्भवे खण्डे धनर्णे तत्र दर्शितम् ।
सरूपेणान्यवर्णेन तुल्यं रूपं च ते यदा ॥ २९४ ॥

धने तत्र च तद्वृत्तासिद्ध्या सिद्धिः कथं भवेत् ।
उक्तोदाहरणस्याथ तदर्थं गणक शृणु ॥ २९५ ॥
यत्रोदाहरणे कृत्योः पञ्चाष्टगुणयोर्युतौ ।
त्र्यधिकाविंशतिर्युक्ता वर्गः स्यात्तौ वद द्रुतम् ॥ २९६ ॥
वस्तुतस्त्वखिलं चापि खिलं मूढैरुदाहृतम् ।
अवर्गतत्त्वकृत्येदं तन्मतं नैव सन्मतम् ॥ २९७ ॥
इष्टं कृत्वैकवर्णस्य मानं वीजोक्तिवत्पदे ।
ह्रस्वज्येष्ठे ततः सिद्धिर्येनोदाहरणस्य तु ॥ २९८ ॥
भा*स्करोक्तं कक्षाविम्बं स्वीकृतं वक्तृभिर्भ्रमात् ।
तन्निराकरणं त्वत्तं दार्ढ्यार्थं कथ्यते पुनः ॥ २९९ ॥
कक्षावृत्ते चक्रलिप्ताः खगस्य
लिप्ताविम्बं तद्वशेनैव नूनम् ।
सूक्ष्मासन्नं सूर्यमुख्यैः सदुक्तं
तस्मादार्यैर्बिम्बकं योजनैर्यत् ॥ ३०० ॥
निघ्नं कार्यं चक्रलिप्ताभिराप्तं
स्वीयैः कक्षायोजनैर्विम्बलिप्ताः ।
ताः स्युः कक्षालिप्तिकामानसिद्धा
ये तद्विम्बं लिप्तिकाद्यन्यमानात् ॥ ३०१ ॥
कुर्वन्त्यज्ञा रासभा एव तेऽतो-

---

* अत्र विशेषो विम्बानयने,
त्रिज्याहतं विम्बदलं विभक्तं स्वगर्भसूत्रेण फलस्य चापम् ।
यत्तेन युक्ता रहिताः खगस्य नतांशकाः पृष्ठभवाः पृथक्स्थाः ॥
पृष्ठाख्ये ते नतलवमिती कल्पयित्वा कयोश्चि-
द्गर्भाख्ये ये नतलवमिती तारयोस्तद्विशेषः ।
षाड्घ्नः स्याद्ग्रहयपुरथो लिप्तिकाद्यं भवेद्वै-
स्ताराकर्णौ नियमित इह स्वीयसौरोक्तिरीत्या ॥

मध्या कक्षा यद्गुणोच्चस्य कक्षा ।
तेनैवाप्ता मध्यकक्षोत्थबिम्ब-
लिप्ताः स्वोच्चे बिम्बलिप्तास्तु ताः स्युः ॥ ३०२ ॥
येनाप्तैवं मध्यकक्षैव नीचे
कक्षा तद्वन्यो मध्यबिम्बीयलिप्ताः ।
ताः स्युर्नीचे कक्षिकाबिम्बलिप्ता
नीचोच्चे तत्त्यं प्रवृद्धिक्षयाभ्याम् ॥ ३०३ ॥
तद्घाताङ्को हारकस्तुल्य एव
प्राचीनोक्तया सर्वखेटेष्वयोग्यः ।
बिम्बं च स्यादन्यरीत्यात्र तेन
नाङ्गीकार्यं तत्कृतं गोलविद्भिः ॥ ३०४ ॥
एवं शिरोमणौ सार्वभौमेऽप्यन्यकलामितेः ।
भौमादिकक्षिकाबिम्बान्ययुक्तान्युदितानि वै ॥ ३०५ ॥
यन्मतेऽस्तौ कुजो मध्यो मेषादौ न तथाखिलाः ।
सौरस्फुटिमुखे तस्य वैगुण्यं किमतः परम् ॥ ३०६ ॥
शिरोमणौ लल्लकृतं दोषाक्रान्तं बलात्कृतम् ।
तत्समुद्धरते विद्वान् यः स दृग्गोलविद्वरः ॥ ३०७ ॥
धीशब्दाद्गुणकः पञ्च लल्लोक्तो वृत्तभूफले ।
वर्णोऽयं रूपसर्गेऽत्र लेखकाक्षरतोऽथ वा ॥ ३०८ ॥
धीत्यत्र ह्रस्वताभ्रान्तिर्यदीत्यत्र परिश्रमः ।
चरव्यक्षोदयास्तोर्यत्साम्यं तत्र विना कुजम् ॥ ३०९ ॥
भवृत्तं नैव तत्रैव दृश्यो राशिस्तदादतः ।
* धनर्णसन्धौ सद्भावो गतेः शीघ्रफलस्य च ॥ ३१० ॥

---

* अत्र विशेषः ।

तद्गताग्रिमयोः शीघ्रफलयोर्भेददर्शनात् ।
तदाहतः परैरित्थं बुध्यते नात्मदोषतः ॥ ३११ ॥
अथाङ्कसिन्धौ बहवोऽङ्ककानां

कल्प्यते य चलचापमानं यस्य जीवायास्तात्कालिकी गतिरभीष्टा तदा चतुल्यवृद्धावस्य ज्या=ज्या(य+च) द्वयोर्ज्ययोरन्तरं=ज्या (य+च)−ज्याय

$$=\frac{२ \text{कोज्या}\left\{य+\frac{च}{२}\right\}.\text{ज्या}\frac{च}{२}}{त्रि}$$ =चापस्य चगतौ जीवाया गतिरियं चभक्ता जाता चापस्य

रूपगतौ जीवागतिः $$=\frac{२\text{कोज्या}\left\{य+\frac{च}{२}\right\}\text{ज्या}\frac{च}{२}}{त्रि.च}=\frac{\text{कोज्या}\left\{य+\frac{च}{२}\right\}}{त्रि}\times\frac{\text{ज्या}\frac{च}{२}}{\frac{च}{२}}$$

अथात्र यथायथा चमानमल्पं भवेत्तथातथा तत्कालासन्नवेगेन जीवागतिस्तेन यदि चमानं शून्यं तदा जीवायास्तत्कालगतिः $=\frac{\text{कोज्याय}}{त्रि}$ $\left\{यतस्तदा\frac{\text{ज्या}\frac{१}{२}च}{\frac{१}{२}च}=१\right\}$

अथ यदि यचापस्य रूपगत्या पूर्वोत्पन्ना तात्कालिकी गतिस्तदा यचापस्य शरद्विदस्रसङ्ख्यया गत्या का जाता तद्गतौ जीवातात्कालिकी गतिः $=\frac{\text{कोज्याय}\cdot२२५}{त्रि}$

इदमेव तत्कालवेगेन भोग्यखण्डं गृहीत्वा भास्कराचार्येण ग्रहाणां तात्कालिकी गतिः साधिता सा गतिर्यत्र फलमानं परमं भवेत्तत्र शून्यसमा भवत्येव कमलाकरेणेदं सर्वमज्ञात्वैव श्रीभास्करमतं खण्डयति । एवं यातैष्ययोः खण्डकयोर्विशेष इत्यादिविधौ गतखण्डमानं=ज्याग−ज्या(ग−१०)

भोग्यखण्डमानं=ज्या (ग+१०)−ज्याग खण्डयोरन्तरं

$$=२\text{ज्याग}-\left\{\text{ज्या}(ग-१०)+\text{ज्या}(ग+१०)\right\}=२\,\text{ज्याग}-\frac{२\,\text{ज्यागकोज्या}१०}{त्रि}$$

$$=\frac{२\text{ज्याग}.\,\text{उज्या}१०}{त्रि}$$ एवं खण्डयोर्योगमानं=ज्या(ग+१०)−ज्या(ग−१०)

$$=\frac{२\text{कोज्याग}.\text{ज्या}१०}{त्रि}$$

अथ क्रमेण खण्डान्तरं $=\frac{२\text{ज्याग उज्या}१०}{त्रि}=\frac{२\text{ज्याग}.\,\text{ज्या}^{२}१०}{त्रि.२त्रि}$

(यतः $\text{कोज्या}^{२}१०=त्रि^{२}-\text{ज्या}^{२}१०$ आसन्नपदेन $\text{कोज्या}१०=त्रि-\frac{\text{ज्या}^{२}१०}{२त्रि}$

वर्गा अवर्गा अपि वर्गराशेः ।
पदे तु नो विप्रतिपत्तिरत्र
सतामवर्गस्य पदं तु पूर्वम् ॥ ३१२ ॥
अङ्कात्मकं खण्डितमेव युक्त्या
रेखात्मकं स्वीकृतमेव मूलम् ।
चेत्तज्ज्ञ तज्ज्ञानविधिं वद त्वं
जानासि सम्यग्यदि शिल्पशास्त्रम् ॥ ३१३ ॥
येनैव भक्त्या करणी विशुद्धिं
प्रयाति तद्व्यग्रफलाङ्कयोश्च ।
अल्पो भुजः कोटिरिहाधिकस्तु
समावनौ चायतमिष्टमाभ्याम् ॥ ३१४ ॥
कार्यं तु तुल्यश्रुतिजं च सूत्रै-
स्तदेककोणात्कृतकोटिसूत्रम् ।

---

तत उत्क्रमज्या $= \frac{\text{ज्या}^{2}\text{१०}}{\text{२त्रि}}$ खण्डयोगः $= \frac{\text{२कोज्याग. ज्या१०}}{\text{त्रि}}$

अथ शेषांशज्या $= \frac{\text{ज्या१०.शे}}{\text{१०}}$ शेषकोटिज्या $= \text{त्रि} - \frac{\text{ज्या}^{2}\text{१०.शे}^{2}}{\text{२त्रि.१००}} = \text{त्रि} - \frac{\text{उज्या१०.शे}^{2}}{\text{१००}}$

आसन्नमूलेन ।

अथ गतशेषयोर्योगज्यैवाभीष्टज्या तदानयनार्थं न्यासः

$$\left.\begin{matrix} \frac{\text{ज्या१०.शे}}{\text{१०}} \mid \text{त्रि} - \frac{\text{उज्या१०.शे}^{2}}{\text{१००}} \\ \text{ज्याग} \mid \quad \text{कोज्याग} \end{matrix}\right\} \text{अभीष्टज्या} = \frac{\text{कोज्याग.ज्या१०.शे}}{\text{त्रि.१०}} + \text{ज्याग}$$

$$- \frac{\text{ज्याग·उज्या१०शे}^{2}}{\text{त्रि.१००}}$$ ततो गतज्येष्टज्ययोरन्तरं $= \frac{\text{कोज्याग·ज्या१०.शे}}{\text{त्रि.१०}} - \frac{\text{ज्याग·उज्या१०शे}^{2}}{\text{त्रि·१००}}$

$$= \frac{\text{खण्डयोगदल·शे}}{\text{१०}} - \frac{\text{खण्डान्तर.शे}^{2}}{\text{२} \times \text{१००}} = \frac{\text{शे}}{\text{१०}} \left\{ \text{खण्डयोगदल} - \frac{\text{खण्डान्तर.शे}}{\text{२०}} \right\}$$ कोष्टका-

न्तर्गतफलमेव भास्कराचार्येण स्फुटभोग्यखण्डं साधितं तत्तु समीचीनमेव कमलाकरो व्यर्थं खण्डयति ॥

